विकृतांशे पूर्वभागे कालमृत्युरितीरितः[1] ।
चन्द्रांशफलविस्तारं योजयेत् कालवित्तमः ॥ २५८ ॥

चन्द्रांशाधिपतौ जीवे स्वक्षेत्रे शनिसंयुते ।
किटांशान्ते प्रजातश्च [2]दत्तपुत्रयुतो भवेत् ॥ २५९ ॥

किन्नरांशे निशानाथे वृश्चिके केतुसंयुते ।
तदीशे राहुसंयुक्ते सिंहांशे दत्तपुत्रवान् ॥ २६० ॥

स्वपिता च तथा विन्ध्याह्वाल्ये क्लेशेन कर्शितः ।
किंनरांशे पूर्वभागे [3]राजपूज्यो सदा भवेत् ॥ २६१ ॥

[4]काव्यालंकारनाटकवेत्ता च तत्त्वबोधकः ।
सुखे पापयुते चन्द्रे सुतेशे शनिसंयुते ॥ २६२ ॥

बाल्ये च [5]जननीक्लेशं पश्चाद्भ्रातृविहीनवान् ।
उत्तरांशे प्रजातस्य पुत्रारिष्टं विनिर्दिशेत् ॥

सन्धिकाले प्रजातस्य [6]दीर्घजीवी पिता भवेत् ॥ २६३ ॥

स्यात् किन्नरांशे जनितः सुरूपी
मृपालसेवी प्रियभाषणश्च ।
[7]द्वैमातृको पोषितलालितश्च
धनान्वितो दुःखसहोऽतिधीरः ॥ २६४ ॥

शशाङ्कहोराजनितोऽतिसौम्यः
कान्तासमेतः स्वजनोपकारी ।
विद्वान् सदाचाररतोऽविरागी
स्वच्छाङ्गयष्टिश्च स चन्द्रयोगे ॥ २६५ ॥

---

1. इतीरितम् 2. तस्य दत्तपुत्रश्चो भवेत्
3. राजपूज्यश्चिरायुर्वा
4. काव्यनाट्यालंकृतादीनि वेत्तवान् तत्त्वबोधकः ।
5. स्वजनक्लेशं 6. पितृदीर्घायुरादिशेत्
7. मातृद्वये पोषककामिनीशो

चन्द्रयोगे प्रजातस्य स्वपिता भाग्यवान् सदा ।
[1]जनकौ चात्मपितरौ बाल्ये क्लेशेन कर्शितौ[2] ॥ २६६ ॥

किन्नरांशे मातृशोकी[3] नानाव्याकुलवान् भवेत् ।
द्रव्यनष्टादिभीतिश्च[4] जन्मदाये भविष्यति ॥ २६७ ॥

सिंहे प्रजातो नृपतिः स्वधर्मत्याग[5]निर्धनी ।
[6]लोभी मिताशनो नित्यं स्वबन्धूश्च विरोधकृत् ।
[7]तुलांशके प्रजातस्तु परस्त्रीभोगलालसः ॥ २६८ ॥

चन्द्रे केतुयुते बाल्ये [8]ह्यन्यस्त्रीस्तन्यपानवान् ।
सपत्नी[9]मातरो नैकाः कस्यांश्चित् प्रीतिमश्नुते ॥ २६९ ॥

उदयमुपगतेऽर्के पित्तदेही च कामी
शशिसुतनिभवर्णो राजसेवी दयालुः ।
भवति कटुकरसे प्रीतियुक्तोऽत्र जातः[10]
सततमपि मनुष्यः प्रायशो दुश्चरित्रः ॥ २७० ॥

व्ययस्थेऽर्के पित्तदेही [11]सुदारो
दुष्टाचारो राजसेवी सुमन्त्री ।
[12]मर्त्यो भूयो निग्रहे दत्तदृष्टिः
[13]शुक्रे कामी पुत्रवान् भ्रातृहीनः ॥ २७१ ॥

1. प्रत्यक्षमातापितरौ
2. कर्शितः
3. शोकं
4. भीतिंच
5. त्यागि
6. लोभगुणप्रधानो मिताशनश्च स्वबन्धुविरोधी ।
7. तुलांशजातोऽन्यकळत्रगामी ॥
8. अन्य
9. माता बह्वः कस्यचित् प्रीतिमवाप्नुयात् ॥
10. पदार्थः प्रायशः स्वल्पहपः
11. उदारः
12. भूयः सर्वं निग्रहेऽपि मर्त्यः
13. कामी सुपुत्रवान् सोदरभ्रातृरहितः एकाकी सुपुत्रः

केचित् पक्षे किन्नरांशे मातृस्थाने निशाकरे ।
ज्येष्ठभ्रातृयुतश्चेति [1]भगिन्येका प्रजायते ॥ २७२ ॥

कालान्तरे मृतिं विन्द्यात् किन्नरांशस्य सोदरः ।
किन्नरांशे निशानाथे लग्नेऽर्के गुरुवीक्षिते ॥ २७३ ॥

विद्यावान् मधुरभाषी लिपित्रयविशारदः ।
कलत्रद्वयवान् वाग्मी बन्धुवर्गे सुपूजितः ॥ २७४ ॥

पित्रार्जितार्थवान् भोगी स्वभुजार्जितभाग्यवान् ।
हरिभक्तिरतो नित्यं दयादाक्षिण्यशीलवान् ॥ २७५ ॥

लग्ने शुक्रयुते जीवे किन्नरांशे[2] प्रजायते ।
स्वमित्र[3]बन्धुवर्गादि देवब्राह्मणपोषकः ॥ २७६ ॥

मण्डलाधिपतिद्वारे स्वपिता योगवान्भवेत् ।
नरवाहनवान्भोगी धनी सद्राजवल्लभः ॥ २७७ ॥

स्वपिताधिकधर्मात्मा हरिशङ्करभक्तिमान् ।
सोदरभ्रातृरहितः किन्नरांशे पिता सुखी ॥ २७८ ॥

द्रव्यार्जनसमर्थश्च देवतोत्सवधार्मिकः ।
ज्ञातिवर्गे सुभाग्यातिवर्धिके [4]च सुभाग्यवान् ॥ २७९ ॥

भाग्याधिपे राहुयुक्ते पञ्चमे शनि[5]संस्थिते ।
स्वपिता वातरोगेण क्लेशं प्राप्नोति भूरिशः ॥ २८० ॥

वर्गोत्तमे निशानाथे किन्नरांशे च जायते[6] ।
कर्मेशांशकगे जीवे गोचरे मधुमासगे ॥ २८१ ॥

सम्पदाये सूर्ययुक्तौ मौञ्जीबन्धनमादिशेत् ।
सुखेशांशे सत्रिकोणे सुखेशाकान्तराशिगे ॥ २८२ ॥

---

1. भगिनी चैकमेव हि
2. किन्नरांशस्य जातके
3. बान्धवादीनि
4. धी
5. भ्रातके
6. यस जातके

स्फुटयोगं गते जीवे विद्यारंभं विनिर्दिशेत् ।
अष्टमाब्दे विवाहः स्या[1]द्दशमाब्दे च वा यदि ॥ २८३ ॥

सम्पद्दाये सुखी नित्यं पञ्चमाब्दे महाविपत् ।
द्वितीयाब्दे क्रूरमासे बालारिष्टभयं क्वचित् ॥ २८४ ॥

मान्द्यज्वरभयं किंचिद्व्रणरोगात्[2] सुखी भवेत् ।
सिंहे बुधयुते सूर्ये भार्गवेण समन्विते ॥ २८५ ॥

भूसुतेन युते दृष्टे नेत्ररोगप्रपीडितः ।
यत्किंचित्पुण्यिताक्षस्य क्षिप्रेणारोग्यमादिशेत् ॥ २८६ ॥

धनेशे गुरुसंदृष्टे सिंहेऽर्के भृगुसंयुते ।
वयोमध्ये नेत्रपीडां बाल्ये किंचित्प्रपीडितः ॥ २८७ ॥

चन्द्राज्ज्यामित्रगे भौमे सिंहेशे राहुसंयुते ।
विपद्दाये दारहानिर्द्वितीयोद्वाहवान् सुखी ॥ २८८ ॥

[3]कैचित्पक्षे क्षेमदाये द्वितीयोद्वाहयोगवान् ।
सम्पद्दशादौ [4]जनन्यास्तृतीयांशे [5]पितुर्वित्त ॥ २८९ ॥

विपद्दशादौ[6] सन्तानं क्षेमदाये [7]श्रियायुतः ।
सम्पद्दाये क्रियराशे चन्द्राङ्गारकभुक्तिषु ॥ २९० ॥

सापत्नमातृकलहं[8] मातृवंशजनावधि ।
स्वराजन्यजनद्वेषं गोचरे मकरांशगे ॥ २९१ ॥

चापान्ते व्याकुलं चेति चौर्यकलहं महत् ।
क्षुद्रभूपतिसन्तापं कुत्सितप्रभुनाशनम् ॥ २९२ ॥

केस्वन्तरे सौम्यदाये स्वपितृव्याकुलं महत् ।
[9]पिता सेवितराजस्य राज्ये वित्तमादिशेत् ॥ २९३ ॥

---

1. विवाहं
2. रोगस्थान् सुखी
3. किंचि
4. जननी
5. पिता
6. शाद
7. श्रियावहम्
8. सन्तानं
9. स्वपितासेवितभूपानी

सञ्चितार्थविनाश[1]स्याद्रजवाजिभटादिपु ।
अतीव क्लेशकार्याणि देशशोभं विनिर्दिशेत् ॥ २९४ ॥

तृतीयवर्षेऽष्टमवत्सरे वा
दशान्त्यगे[2] पञ्चमवत्सरे वा ।
संवत्सरे त्रिंशति वा पिताब्दे
[3]ज्वरेणचासुमय भवेन्नृणाम् ॥ २९५ ॥

षट्पञ्चाशत्समात्यादौ[4]सप्तपञ्चाशवत्सरे ।
क्रूरमासे ज्वर तापं क्लेशमादुश्चतुष्टयम् ॥ २९६ ॥

तद्दोषपरिहारार्थं शान्तिं कुर्याद्विचक्षण ।
एकषष्टिसमे मृत्यु षष्टयब्दे व्याकुल महत् ॥ २९७ ॥

राजामात्यविरोधेन [5]ह्युपद्रवमुदीरयेत् ।
पश्चात्सौख्यं प्रकुर्वीत राजनीनिधनागमम् ॥ २९८ ॥

प्रवरोद्योगसौख्यानि स्वस्थो भवति निश्चयम् ।
चापान्ते मकरे मन्दे गोचरे मकरे गुरौ ॥ २९९ ॥

अतीव क्लेशकार्याणि पश्चात्सौख्यं सुखावहम् ।
लग्नाद्वा चन्द्रलग्नाद्वा चन्द्रेशांशत्रिकोणगे ॥ ३०० ॥

स्फुटयोग गते मन्दे देहोपद्रवमादिशेत् ।
साधकेशदशासान्धिकाले मृत्युर्न संशय ॥ ३०१ ॥

क्षेमदाये [6]महद्भाग्यं नित्यश्रीर्बुद्धिमान् सुखी ।
त्रिकांशे पूर्वभागे मायाब्दे राजदर्शनम् ॥ ३०२ ॥

मन्दान्तरे सुभाग्यानि पञ्चमे मातुरादिशेत्[7] ।
सम्पाताख्यदशा[8]सन्धिप्रदाये स्वभुक्तिषु ॥ ३०३ ॥

---

1 नश्य
2 दान्विते
3 ज्वरादिभिरभिभवं भवेन्नृणाम्
4 मान्त्यादि
5. उपद्रव
6 महत्
7. मातुमरिशेत्
8 सन्धिप्रदाये

ऋतुशान्त्यादिसौभाग्यं क्रमासं विना शुभम् ।
गुरोर्द्वितीयपर्याये स्वोच्चे श्रीमान् सुखी भवेत् ॥ २०४ ॥

गुरुद्वितीयपर्याये गोचरे द्वादशे गुरौ[1] ।
पुत्रोत्सवसुभूप्राप्ति[2] राजसन्मानमादिशेत् ॥ २०५ ॥

पञ्चमाधिपतौ जीवे स्वक्षेत्रे शनिसंयुते ।
सिंहलग्ने भजातस्य सीमन्तशिशुनाशनम् ॥ २०६ ॥

दारद्वये सुसन्तानं शुक्रभाग्यांशसंख्यया ।
पुत्रद्वयं चिरायुष्यं पुत्रिका च तथा भवेत् ।
शेषं नाशमिति प्राहुः[3] किन्नरांशे च जायते ॥ २०७ ॥

सर्पद्राये राहुचन्द्रौ जीवसौम्यान्तरे तथा ।
अतीव क्लेशकार्याणि देहपीडां विनिर्दिशेत् ॥ २०८ ॥

पञ्चमाधिपतौ जीवे स्वक्षेत्रे शनिसंयुते ।
[4]एकविंशात् परं योगं वत्सरे षोडशे तथा ॥ २०९ ॥

लक्ष्मीयोगफलं सत्यं विपद्दाये धनागमम् ।
राजान्तरे धनप्राप्तिः क्षेमदाये विशेषतः ॥ २१० ॥

पञ्चमाधिपतौ जीवे स्वोच्चांशे शनिसंयुते ।
लक्ष्मीपष्ठ्यंशर्क्षे[5] क्रियायोजयेत् कालवित्तमः ॥ २११ ॥

लक्ष्म्यंशजः स्त्रीसहितः सुपुत्रः
समस्तयोगैरुपसेव्यमानः ।
विद्यान्वितो भूपतिरग्रजकश्च
वधूद्वयाढ्यो हरिपादसेवी ॥ २१२ ॥

पापे शनियुते जीवे स्वोच्चांशे राजपूजितः ।
कामितार्थप्रदो नित्यं [6]कामिनीनां विशेषतः ॥ २१३ ॥

---

1. गुरुः
2. सुभूप्राप्तिः
3. किन्नरांशस्य जातके
4. एकविंशद्वर्षाद्योगं षोडशवत्सरे
5. शर्क्षे
6. कामिन्यः स्वकामिनः

जन्मलग्नाधिपे सूर्ये [1]शुक्रसौम्यसमन्विते ।
भाग्याधिपेन सन्दृष्टे [2]योगोऽयं पारिजातकः ॥ ३१४ ॥

[3]लग्नेशो पारिजाते यदि भवति तथाप्यासते राजमान्यो
जातो धन्यप्रियोक्तिः सकलजनसुखोल्लासकृद्भूरिभोगी[4] ।
पुत्रैः पौत्रैश्च युक्तो युवतिजन[5]नयनेक्षुचापातिरम्यः
पापैर्दृष्टः स चेत्स्यात्परकृतजननं पापबुद्धिः [6]मदान्तः ॥ ३१५ ॥

साधनेशदशास[7]न्धौचापान्ते मकरे शनौ ।
वृश्चिकादि[8]त्रिमासेषु कृष्णपक्षे मृतिं वदेत् ॥ ३१६ ॥

किन्नरांशे निशानाथे नीचे वर्गोत्तमांशके ।
देहान्ते नरकं [9]याति परलोके[10] न विद्यते ॥ ३१७ ॥

मनोहरे किन्नरांशे [11]चैकत्र फलमादिशेत् ।
चन्द्रनाडीफलं सत्यं मत्यंश दैवकेरलम् ॥ ३१८ ॥

—*—

## नित्यानित्यकारकभावफलानि ।

[12]भावेषु जायात्मजमातृभावाः
तृतीयषष्ठाष्टव्ययाश्च सर्वे ।
कुर्वन्ति दुःखं च सुखं च [13]जन्तोः
स्वयंगतोऽन्ये विफलं दिशन्ति ॥ ३१९ ॥

---

1. शुक्र
2. पारिजातकं भवेत्
3. लग्नेशः पारिजाते सति यदि भवति भास्वते राजमान्यो
4. भोगः
5. भवन्
6. स्वदान्तः
7. त्रिषमा
8. राये मासे
9. यान्ति
10. लोके
11. एक
12. भवेषु पुत्रो जाया सहोदराप्यनन्तरः च भावः ।
13. जन्तः स्वयोगतो

भावं च भावस्य च कारकं च
नित्यं तथानित्य[1]बलत्वमेव ।
वदेत् फलं सम्यगवे[2]क्ष्य तत्र
स्यात् कारकोऽत्यन्तबलान्वितश्च ॥ ३२० ॥

भावेशाकान्तराशीनामधिपो नित्यकारकः ।
शुभेक्षिते शुभ[3]करः पापी स्यात् पापवीक्षितः ॥ ३२१ ॥

यस्मिन् भावे त्वनित्याख्य. कारकः [4]प्रबलो यदि ।
[5]तेन भावेन वृद्धिः स्यात् क्षेमलाभो भविष्यति ॥ ३२२ ॥

अनित्यः पापसंयुक्तो [6]दृष्टो वा पापखेचरैः ।
भावहानिं वदेद्धीमान् [7]भावानिष्टदशासु च ॥ ३२३ ॥

वर्गोत्तमे वा स्वगृहे स्वतुङ्गे
स्यात् कारकः संस्थितिमाननित्यः ।
[8]अन्यान्समस्तानपि भावनाथान्
जित्वा [9]प्रदीप्तो शुभमेव कुर्यात ॥ ३२४ ॥

ज्ञात्वा योगं च[10]नाडीमितरग्रहगतिं मापयित्वा तदंश
नीत्वा सम्यग्निमित्थं विशदतामिति वीक्ष्य भावान्तराग्रम् ।
चक्रं ज्ञात्वा दशां च प्रतिपुरुषमपि प्राकृतं वीक्ष्यमेदं
ब्रूयाच्चेष्टामवस्थां निजनिजफलं चिन्तनीयं [11]च तज्ज्ञैः ॥ ३२५ ॥

वर्गोत्तमांशे स्वगृहे स्वतुङ्गे
दुःस्थानगे वा शुभमेव ब्रूयात् ।
यद्भावनाथा [12]मुपयान्ति तत्स्थाः
पश्यन्ति वा तत्फल वृद्धिमाहुः ॥ ३२६ ।

---

1. भवीबलेवा
2. गवे
3. शुभ पापः
4. प्रबल
5. तस्मिन् भावे च
6. दृष्टं वा यदि पापकैः
7. भावादिष्टदशान्तरे
8. अन्यानसमस्तानपि भावनाथं
9. प्रदीप्ता
10. नाडी परिजनपदवी
11. चरेति.
12. पुन

कालं च देशं च तथा ग्रहाणां
योगं च दृष्टिं च बलाबलं च ।
चेष्टां[1]च चित्तं च तथेङ्गितं च
विज्ञाय [2]तज्ज्ञा हि फलं वदन्ति ॥ ३२७ ॥

भाग्याधिनाथाश्रितराशिनाथो
ह्यनित्य[3]संज्ञो किल कारकश्च[4] ।
फलस्य सर्वस्य स एव दाता
[5]ह्यन्योऽपि मुख्यो न तदा बलीयान् ॥ ३२८ ॥

स्वक्षेत्रवर्गोच्चमतुङ्गमित्र
[6]शुभग्रहाणां यदि मध्यवासः ।
स कारको भद्रतरं करोति
नीचारिमूढोऽशुभदृग् [7]विहीनः ॥ ३२९ ॥

यद्भावनाथाः पितृमातृभाव
नाथान्तरस्था यदि हीन[8]मस्थाः ।
पित्रोः पुरा ते मरणं भजेरन्
मात्याधि[9]काश्चेन्मुनयो वदन्ति ॥ ३३० ॥

परमोच्चगते सुता[10]धिनाथे
[11]ओजांशके वा शुभदृष्टियुक्ते ।
सुतभे स्वशुभैर्दृष्टयुक्ते
[12]वदन्तिसन्तो बहुपुत्रमेनम् ॥ ३३१ ॥

---

1. चेष्टां चित
2. तज्ज्ञो हि फलं वदन्ति
3. मन्द.
4. कारकं तु
5. शुभेक्षणहेतुं
6. मध्यस्थगमन्यपि विद्यमानः
7. विलग्नात्
8. मग्ना
9. बधागमा
10. सुधा
11. सुतांशे शुभखेचरेण दृष्टे
12. बहुपुत्रमत्र वदन्ति सुधियस्तु.

भ्रातृस्थाने सूर्यपुत्राधिरूढे
  वन्ध्यावस्थां प्राप्य रन्ध्रेश्वरोऽपि ।
पुत्रस्थाने [1]पापयुक्ते च दृष्टे
  [2]पुत्राभावो वंशविच्छेदयोगः ॥ ३३२ ॥

रन्ध्रे त्रिकोणे दिननाथपुत्रे
  लग्नाष्टमांशे तु बलैर्विहीने ।
जातस्य पुंसो ऋणपातकाख्यं[3]
  दुष्पुत्रयोगं [4]प्रवदन्ति सन्तः ॥ ३३३ ॥

श्रियः प्रजांशे यदि चेत् सुतेशो
  तत्कारको वा तदनित्यकर्ता ।
[5]तत्र स्थिता वा शुभखेचराश्च
  पुत्र्यो भवेयुर्बहुसद्गुणाढ्याः ॥ ३३४ ॥

सुवर्णकल्पद्रुमदानमेवं
  सुवर्णनागोज्ज्वललिङ्गदानम् ।
[6]चतुर्भुजस्यापि हरेः प्रदानं
  [7]पापापनोदाय वदन्ति सन्तः ॥ ३३५ ॥

वन्ध्यांशयोगे यदि चेत् सुतेशे
  सन्तानगोपालकदानमाहुः ।
मृतप्रजांशे तु यदा सुतेशे[8]
  [9]देयं च दानत्रयशिंशुमारम् ॥ ३३६ ॥

कल्पद्रुमस्यापि च षड्पलैश्च
  भेदो [10]नरस्यास्तिसुवर्णदाने ।

---

1. दृष्टिते भरेषा  2. सत्यं सन्तानमृत्याभिरोधः
3. कास्यो  4. प्रवदेत्पुराणः
5. तत्रैव चेदिक्षतनाहुरस्मात् या श्रियप्रजायेव भवन्ति षट्पः
6. शोषद्भुज  7. निदानमाहुः पुरुषः प्रभृतः
8. शः  9. शीशिशुमारस्य तदप्रदानम्
10. नरोऽप्यस्ति

तदर्धमर्धं यदि वा ततोऽपि
न्यूनं न कार्यं मुनयो वदन्ति ॥ ३३७ ॥

मीने सिंहाशगे चंद्रे कुळीराशे घटेऽपि च ।
स्थिरलग्ने प्रजातस्य [1]सजीवमगिनीद्वयम् ॥ ३३८ ॥

एका भाग्यवती चेति पुत्रीपुत्रसमन्विता ।
कालान्तरे भ्रातृशोकं पुत्रनाशेन कर्शिता[2] ३३९ ॥

[3]भ्रातुः कलत्रमूलेन बहुमाग्यवती [4]शुभा ।
[5]कीटलग्ने प्रजातस्य सोदरी च सुमङ्गली ॥ ३४० ॥

कुम्भे मीनाशगे जीवे कुटिगे [6]शेच नाडिगे ।
विप्रजन्मा सुखी नित्यं [7]भगिनीभ्रातृमान् सदा ॥ ३४१ ॥

कन्यांशे वृश्चिके लग्ने दुर्भगा[8]शे च जायते ।
बाल्ये दारिद्र्यमाप्नो ज्येष्ठभ्रातृविहीनवान् ॥ ३४२ ॥

लग्नात् तृतीयगे भौमे स्वोचे सिंहाश[9]संस्थिते ।
[10]सोदरभ्रातुरेकस्य देशत्यागं विनिर्दिशेत् ॥ ३४३ ॥

[11]तिस्रो सजीवा भगिन्य एका भाग्यवती [12]शुभा ।
कुटिलाशकगे जीवे केचित्पक्षे [13]च भ्रातृमान् ॥ ३४४ ॥

[14]द्वे भगिन्यौ सजीवे च ह्येका ह्यैश्वर्यवती सदा ।
सिंहांशगे विलग्नेशे लग्नारूढे निशाकरे ॥ ३४५ ॥

---

1 भगिनीद्वयमातुरी
2. कर्शित
3 लग्नमूलेन
4. शुभी
5. वृश्चिकस्य प्रजातस्य बहुफल
6. शस्य
7. सोदरभ्रातृभगिनी
8 शस्य [illegible]
9 कारक
10. सोदरभ्रातृक [illegible]
11. भगिनीद्वयन्तु वं
12. शुभी
13 ज्येष्ठभ्रातृमान्
14. भगिनीद्वयन्तु [illegible]

अग्रहारे निवासः स्याद्धास्ये क्लेशदरिद्रवान् ।
सप्तविंशात् परं भाग्यं भगिनी[1]भर्तृहेतुना ॥ ३४६ ॥

माता गुणवती पूता भ्रात्रासङ्गमिष्यति[2] ।
भाग्यकाले [3]पित्रेरिष्टं दशासन्धौ न संशयः ॥ ३४७ ॥

कुटिलांशे कुन्तलांशे वृश्चिके [4]च प्रजायते ।
[5]अंशद्वयोः फलं चैकं त्रिशाब्दे बहुभाग्यवान् ॥ ३४८ ॥

सम्पचारदशान्त्यादौ[6] विपद्दाये [7]पितुर्विपत् ।
मातानुमरणं चैति योगवान् कीर्तिमान् सुखी ॥ ३४९ ॥

मीने [8]कन्यांशके चन्द्रे कुम्भे वा कटकांशके ।
दुर्भगांशे प्रजातश्च[9] मन्ददायेऽल्पसौख्यवान् ॥ ३५० ॥

बाल्ये मसूरि[10]मापन्नो ज्वरोपद्रव[11]पीडितः ।
[12]ज्वरेण भीतिमापन्नो पश्चादारोग्यवांस्तदा ॥ ३५१ ॥

लग्ने राहु[13]समायुक्ते ह्यसितेन युतेक्षिते ।
सर्वदा क्लेशचित्तः स्याद् विषाग्निज्वर[14]पीडितः ॥ ३५२ ॥

षद्भावे [15]चर्मरोगी कारागारे प्रपीडितः ।
क्रूरकृत्यश्छन्नपापी म्लेच्छाहिंसापरो भवेत् ॥ ३५३ ॥

सिंहे गुरुस्थिते काले कन्यान्ते [16]वा तुलाधरे ।
मन्ददाये सिंहशनौ [17]मौञ्जीबन्धनमादिशेत् ॥ ३५४ ॥

---

1. भ्रातु
2. स्वभ्रातानुगमिष्यति
3. पितरिष्टं
4. लग्नजातके
5. फलं चैदेकमाप्नोति
6. न्स्यादि
7. पितान् विपत्
8. यदा
9. प्रजातस्य
10. रिकागण्डे
11. पीडवान्
12. ज्वरभीतिप्रदश्चेति पश्चादारोग्यमादिशेत्
13. प्रपन्नश्च
14. गण्डवान्
15. स्यात्स्य रोगं
16. वौळिगोपि च
17. उपनयनमिति स्फुटम्

मन्दे शुक्रान्तरे काले [1]तुत्तरायणगे रवौ ।
शुक्लपक्षे वसन्ते च मौञ्जीबन्धनमादिशेत् ॥ ३५५ ॥

दुर्भगांशकगे जीवे मौञ्जीबन्ध[2]मुहूर्तके ।
तद्वर्षे वा ज्वर चेति क्षिप्रेणारोग्यमादिशेत् ॥ ३५६ ॥

शुक्रांशाधिपतौ स्वोच्चे [3]बाल्य वृद्धाद्योगवान् ।
सप्तमे शनिदोषेण स्वदशान्त्ये विशादहृत् ॥ ३५७ ॥

दारेशांशे तत्त्रिकोणे स्फुटयोग गते शनौ ।
जन्मसम्पद्दशाकाले पितुःस्वस्य मतो यथा ॥ ३५८ ॥

*पितृष्व[4]सुर्यनोद्दु स्वं मातृनशेऽस्यरिष्टकृत् ।*
सूर्ये यावत्कलानि[5] सुधन्दे यावत्फलानि च ॥ ३५९ ॥

तावत्संख्या [6]द्दि पित्रोश्च भविष्यन्ति च सोदरा ।
एमात् सप्तमगे केत्वावसितेन समन्विते ॥ ३६० ॥

पापांशगे तदीशे च कळत्रद्वयगवान् ।
कुटिलांशकगे जीवे मेषे मेषांशगे भृगौ ॥ ३६१ ॥

[8]गर्भस्रावा चैकभार्या दीर्घमायुश्च विन्दति ।
परस्त्रीसक्तवान् पापी सप्तमे शनिसंस्थिते ॥ ३६२ ॥

पुत्रशोक [10]च लभते दारसौख्यविहीनवान् ।
पुत्रस्थानाधिपे जीवे रन्ध्राधिपसमन्विते ॥ ३६३ ॥

एमात् सप्तमगे पापे पुत्रेत्वविनाशवान् ।
विरद्धांये पुत्रशोक सिद्धान्ते लग्ने शनौ ॥ ३६४ ॥

---

1 उत्तरायण
2 पक्षकाले
3. भाग्य
4 स्वराज्य च धनि
5 षष्ठ शनि
6 पितामाता महादशमिति द्रष्टव्य
7. दोषस्य
8 गर्भस्राव
9 सम्पदे
10 मद्भवेत

[1]देहकार्श्यकरव्याधिमेहरोगं विनिर्दिशेत् ।
लाभे शनिस्थिते काले तत्त्रिकोणे क्रियेऽपि च ॥ ३६५ ॥

जन्मे वा सप्तमे वापि राज्याधिपतिनाशनम् ।
स्वजन्मदेशे [2]नृपतेर्ह्यपमृत्युर्भविष्यति ॥ ३६६ ॥

तृतीयान्ते [3]स्थिते देशे राजपत्नी मरिष्यति ।
एकोनत्रिंशगे वर्षे त्रिंशाब्दे वाथवापि च ॥ ३६७ ॥

कुटिलांशे प्रजातस्य विह्वलेन महाविपत् ।
सप्तविंशात् सुभाग्याप्तियोग:[4] स्याद्द्वित्रिवत्सरम्[5] ॥ ३६८ ॥

पश्चाद्दुःखाकुलमाप्नोति योगभङ्गं विनिर्दिशेत् ।
मन्दांशगे तत्त्रिकोणे स्वर्भा[6]नौ च सितांशगे ॥ ३६९ ॥

स्फुटयोगं गते मन्दे लोके दुर्भिक्ष[7]मादिशेत् ।
कुटिलांशे पूर्वभागे जन्मादिदशवत्सरे ॥ ३७० ॥

अनावृष्टिभयं चेति त्रयस्त्रिंशोपरिस्तथा ।
चत्वारिंशात्परं चेति [8]घनावृष्टिभयं महत् ॥ ३७१ ॥

पौष्णश्रवणहस्तार्द्राभरणी वायुभेष्वपि ।
शनै[9]श्चरश्चरत्नूणां दुर्भिक्ष[10]भयदः स्मृतः ॥ ३७२ ॥

जन्मसम्पद्दशा[11]यां च यत्तत्कालेऽर्क[12]नन्दने ।
तत्तत्काले फलं वाच्यं योजयेत् कालवित्तमः ॥ ३७३ ॥

[13]राहोस्समकले मन्दे तृतीयैकादशस्थिते ।
देहभङ्गं प्रजाक्षोभं भूलोके भीकरं महत् ॥ ३७४ ॥

---

1. प्रकुर्वीत योगरोगं
2. नृपतिः शपमृत्युस्तथा इतः
3. ' या स्वदेशे
4. योगं
5. वत्सरे
6. र्भानुश्च
7. शम्बरम्
8. अना
9. श्चरं च नृणां
10. भयदाः स्मृताः
11. दशादीनि
12. नन्देन
13. राहुणकं गते

कुटिलांशकगे जीवे नदीप्रान्तस्य[1]पट्टणे ।
सम्पद्दाये शुभाप्यासिं[2] बन्धुप्राबल्यमादिशेत् ॥ ३७५ ॥

पूर्वभागे प्रजातस्य स्थिरराशिचतुष्टये ।
स्फुटयोगं गते मन्दे मण्डलाधिपतेर्विपत् ॥ ३७६ ॥

सूर्यांशगे तत्त्रिकोणे स्फुटयोगं गते शनौ ।
स्वजन्मदेशे नृपती राज्यनाशेन कर्शितः ॥ ३७७ ॥

रन्ध्राधिपदशाकाले [3]वेधकग्रहभुक्तिषु ।
क्रूरान्दे क्रूरमासेन स्वजनारिष्टशोकवान् ॥ ३७८ ॥

[4]व्ययाधिपस्य स्फुटयोगकाले
[5]सुखाधिपस्य स्फुटयोगभावे ।
सहोदरीभर्तृवियोगदुःख-
[6]मन्तःस्फुटेनापि विचिन्तनीयम् ॥ ३७९ ॥

सुखाधिपदशाकाले व्ययाधिप[7]निभुक्तिषु ,
वेधग्रहान्तरे काले [8]सोदर्याश्च मनोव्यथा ॥ ३८० ॥

तद्भावे सुतारिष्टं ज्ञातिवर्गे मनोव्यथा ।
बन्धुवर्गे विचा[9]रः स्वामित्रवर्गे विशेषतः ॥ ३८१ ॥

तुङ्गे मीनांशगे जीवे वृश्चिके [10]च प्रजापने ।
[11]आयुष्मन्तौ च द्वौ पुत्रौ शेषे नाशमिनीरयेत् ॥ ३८२ ॥

कुलिगांशे पूर्वभागे पुरा पापस्य देवता ।
सन्तानोत्पत्तिना[12]शः स्यात्स्त्रीत्व[13]रोगपरीडितः ॥ ३८२ ॥

---

1. तस्य
2. आप्यगी
3. वेधग्रहविषु भुक्तिषु
4. व्ययेशस्यापि
5. सुखेश स्फुट
6. मन्तः
7. दशोऽपहा
8. सहोदरी
9. विचारे
10. सप्तमे
11. सन्तानद्वयमायुष्
12. नाशः
13. रोगान्वितो भवेत्

शिशुमारप्रदानेन [1]सत्पुत्र लभते सुखी ।
तदभावे त्वरिष्टं स्यात् पुत्रभाव [2]प्रकल्पित ॥ ३८४ ॥

सेतुस्नानं शिशुमारं स्वर्णनागेश्वरार्चनम् ।
कालज्ञस्य प्रदानेन [3]दीर्घजीवित्पुत्रवान् ॥ ३८५ ॥

एकाशीतिपद चक्रं कल्पोक्तविधिमार्गत ।
अर्चयेद्धनमात्रेण श्लेष्मरोगोपशान्तये ॥ ३८६ ॥

कुटिलांशे पूर्वभागे वृश्चिके [4]च प्रजायते ।
प्रतिबिंबप्रदानेन क्षयरोगनिवारणम् ॥ ३८७ ॥

नवग्रहमख[5]श्चैव स्वगृह्योक्तविधानत ।
महारुद्राभिषेकेण [6]मृत्युदोषो विनश्यति ॥ ३८८ ॥

रन्ध्रेशांशे त्रित्रिकोणे स्फुटयोग गते शनौ ।
रन्ध्रेशदृष्टिराशौ तु देहोपद्रवमादिशेत् ॥ ३८९ ॥

क्षयावस्थे निशानाथे [7]त्वसितेन निरीक्षिते ।
लग्ने[8]राहौ स्थिते जात क्षयरोगातुरो भवेत् ॥ ३९० ॥

तद्दोषपरिहारार्थं चन्द्र[9]स्य प्रार्थना वदेत् ।
राजतं चन्द्रमभ्यर्च्य दान कुर्याद्विशेषत ॥ ३९१ ॥

शनिद्वितीयपर्याये सिंहान्त्या[10]दिषु तौलिषु ।
[11]मेहरोग च लभते शान्ति कुर्याद्विचक्षण ॥ ३९२ ॥

लग्नाधिपे स्वोच्चगते त्रिकमेशनवांशगे ।
पञ्चत्रिंशात् परं भाग्ये त्रिंशाब्दे व्याकुले महत् ॥ ३९३ ॥

---

1 दृढसन्तानवान् सुखी
2 मिति मृग्यम्
3 पुत्रोत्पत्तिश्चिरायुषम्
4 लग्नगतके
5. स्वण्डश्च
6 गण्डदोषोपशान्त्ये
7 असितेन
8 राहुग्रस्तस्य
9 प्रार्थनमादिशेत्
10 दि च तौलिगे
11. मेहरोग प्रकुर्वीत

राजामात्यप्रसादेन विशेषपरि महत् सुखम् ।
निधनाधिपदोषेण मध्ये मध्ये विचारवान् ॥ ३९४ ॥

अष्टमाधिपतौ सौम्ये कर्मेशेन समन्विते ।
अल्पयोगं प्रकुर्वीत सचिवां[1]शे च जायते ॥ ३९५ ॥

चन्द्रे शनियुते दृष्टे लग्ने पापे प्रजायते ।
परद्रोहादिघातेन कुटिलांशे रुजातुरः ॥ ३९६ ॥

शनिवक्रगते काले विमलो दृष्ट उच्यते ।
इदमेव फलं सत्यं योजयेत् कालवित्तमः ॥ ३९७ ॥

सुखेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ।
सुखेशदृष्टिराशौ वा बन्धुक्लेशं विनिर्दिशेत् ॥ ३९८ ॥

सप्तमोत्थ मनस्तापं तद्वारा सप्तमावधि ।
विशेषक्लेशकालं [2]च योजयेत् कालवित्तमः ॥ ३९९ ॥

भाग्येशांशे तत्त्रिकोणे स्फुटयोगं गते गुरौ ।
भाग्येशदृष्टिराशौ तु भाग्यकालं विनिर्दिशेत् ॥ ४०० ॥

लग्नेशांशे तथा चिन्त्याल्लग्नेशाक्रान्तराशिगे ।
लग्नेशदृष्टिराशौ तु योग[3]कालं वदेत्तथा ॥ ४०१ ॥

कुटिलांशे योगकाले राजसम्मानसौख्यवान् ।
राजामात्यप्रसादेन सर्वलाभं विनिर्दिशेत् ॥ ४०२ ॥

सुखलाभस्वभूपालियोंगराशिगते गुरौ ।
अतीव सौम्यका[4]लः स्याद्योजयेत् कालवित्तमः ॥ ४०३ ॥

शनिचारवशान् क्रूरो राहुचारवशात् [6]क्रमम् ।
गुरुचारवशात् सौम्यं फलानि परिचिन्तयेत् ॥ ४०४ ॥

1. सप्तमांके
2. स्मृतौ
4. कर्मे
३ कालमिति स्मृतम्
६. क्रमम्

द्यूनाधिपदशाकाले[1]त्वपमृत्युर्भविष्यति ।
स्वमुक्तौ व्याकुलं चेति क्रूरमासे न संशयः ॥ ४०५ ॥

योगांशराशिगे जीवे शुभांशे शुभमश्नुते ।
शुभशोभनकार्याणि शुभमासे न संशयः ॥ ४०६ ॥

एकचत्वारिंशकाब्दे कुटिलां[2]शे च जायते ।
अपमृत्युभयप्राप्तिः शान्तिं कुर्याद्विचक्षणः ॥ ४०७ ॥

कालचक्रादिदोषेण[3]जातस्य कुटिलांशके ।
तुलाशनौ बन्धुवर्गे ह्यरिष्टमिति चादिशेत् ॥ ४०८ ॥

वृश्चिके वा मनस्तापं योगभङ्गं शुभाशुभम् ।
अष्टचत्वारिंशकाब्दे कालमृत्युभयं महत् ॥ ४०९ ॥

चात्वारिंशात् परं चेति [4]ह्यपमृत्युस्तदाश्रितः ।
पञ्चाशद्वर्षपर्यन्तं योगायुर्निश्चयं भवेत् ॥ ४१० ॥

अष्टाचत्वारिंशकाब्दे [5]ग्रहपीडा भविष्यति ।
[6]चत्वारिंशात् परं ज्ञेयं महामार्गेण मारकम् ॥ ४११ ॥

जीविते जन्मदेशेषु योगवान् कीर्तिमान् सुखी ।
तुलाशनौ तु सन्तानं दीर्घमायुश्च विन्दति ॥ ४१२ ॥

चन्द्रांशमासे निर्याणं चन्द्राकान्तस्य मासगे ।
शुक्लपक्षे शुक्रवारे सौम्यवारे[7]ऽपि वा मृतिः ॥ ४१३ ॥

मेषांशगे क्रिये शुक्रे वृश्चिके [8]तु प्रजायते ।
आपत्संन्यासवान्नित्यं [9]जितेन्द्रियपरो भवेत् ॥ ४१४ ॥

---

1. अपमृत्युस्तथाकृतः
2. शस्य जातके
3. कुटिलांशस्य जातके
4. अप
5. ग्रहाशाश्च
6. चत्वारिंशे परश्चेति महामार्गेऽपमृत्युमान्
7. क्षारेण
8. लग्नजातके
9. मिन्द्रियातनवान् भवेत्

## अष्टवर्गसंबन्धदशाफलानि ।

मध्यात् फलाधिके लाभे लाभात्क्षीणफले व्यये ।
यस्य व्ययाधिके लग्ने भोगवानर्थवान् भवेत् ॥ ४१५ ॥

लग्ने यावत् फला[1]निस्युस्तावद्वर्षाव परंसुखम् ।
मूर्त्यादिव्ययभावान्तं दृष्ट्वा भावफलानि च ॥ ४१६ ॥

मित्राष्ट[2]वर्गे लग्नेशे [3]फलहीनस्य राशिषु ।
स्फुटयोगं गते जीवे [4]स्वल्पसौख्यं विनिर्दिशेत् ॥ ४१७ ॥

एकद्वित्रिफलान्यस्मिन् लग्नेशाष्टकवर्गके ।
अतीव क्लेशकार्याणि तद्राशौ गोचरे शनौ ॥ ४१८ ॥

[5]पञ्चबिन्दुसमायुक्ते लग्नेशाष्टकवर्गके ।
शुभग्रहस्थिते काले [6]ह्यतीव श्रियमादिशेत् ॥ ४१९ ॥

पञ्चमा[7]दिफलाधिक्ये पापाक्रान्तस्य कालगे ।
योगदाये महाभाग्यं गृहे गोधनसङ्कुलम् ॥ ४२० ॥

चन्द्राष्टवर्गं निक्षिप्य [8]ह्यष्टमांशविधानतः ।
चन्द्रे पूर्णफ[9]लैर्युक्ते तद्राशीशदशा सुखम् ॥ ४२१ ॥

राजयोगं प्रकुर्वीत कल्पयेत् कालवित्तमः ।

दायेश्वरो[10] पूर्णफलेन युक्तो
यदा तदानीं तुरगं गजं च ।
लभेत राज्ञां चतुरन्तयानं
लोके च कीर्तिं हृदये च सौख्यम् ॥ ४२२ ॥

---

1. सन्ति
2. वर्गे
3. बल
4. अल्प
5. पञ्चमाधिपतेर्युक्तं
6. अतीव
7. माधि
8. अष्ट
9. लोपेते
10. श्वरे

दशेश्वरो मध्यबलेन युक्तो
वदन्ति बाक्षेमगतिं[1] च मूर्तिम् ।
आरम्भकार्याणि फलन्ति मन्दं
वित्ते बलिष्ठे तु विनाशमाहुः ॥ ४२३ ॥

दशेश्वरो हीनबलेन युक्तो
यदा तदानीं द्रविणस्य नाशम् ।
स्थानच्युतिं च प्रवदन्ति सन्तो
जनापवादं पशुजीवहा[2]निम् ॥ ४२४ ॥

कलत्रपुत्रादिषु रोगहेतो
रत्यन्तदुःखं प्रवदन्ति सन्तः ।
[3]पितृमातृपुत्रादीनां रोगो भवति चात्मनः
दशेश्वरेहीनबले व्याकुलं भवति ध्रुवम् ॥ ४२५ ॥

दशेश्वरो नष्टबलेन युक्तो
विनाशयत्येव [4]शरीरसौख्यम् ।
[5]दशाधिपो पूर्णबलेन युक्तो
शुभान्वितो वा शुभवृद्धिमाहुः ॥ ४२६ ॥

जीवेत कथंचित सुखतो विहीनं
कलत्रपुत्रादिजनैर्विरोधम ।
योगप्रदांशो यदि चेद्दशायाम्
[6]पद्धर्मलाभं भवतीह भूम्याम् ॥ ४२७ ॥

कलत्रमित्रात्मजबान्धवाद्याः
सर्वे समेष्यन्ति नृपप्रसादात् ।
शत्रुप्रदांशाधिपदायकाले
क्रूरांशयोगे रिपुचोरभीतिः ॥ ४२८ ॥

---

1. गतिः सुख मत्
2. हानिः
3. स्वजनारिरुग्शोकादिभ्योद्यानविद्रवम्
4. धनातकान्तम्
5. अन्यमते शुभफलमपन्ति
6. देशाभिनाशो भवतीह भूम्याम्

स्थानच्युतिं [1]स्वेष्टजनैर्विरोधं
स्वराजकार्येण [2]विचिन्तनीयम् ॥ ४२९ ॥

दशाधिपे हीनबले [3]च दुःस्थे
तदीश्वरेणापि युतेक्षिते वा ।
[4]शुभैर्न दृष्टे धननाशमाहुः
सहोदरभ्रातृवियोग[5]दुःखम् ॥ ४३० ॥

तदीशे शत्रुराश्यंशे स्वस्थानभ्रष्टमुक्तिपु ।
शत्रुभ्रष्टान्तरे चापि शत्रुभीतिवशाद्व्यथा ॥ ४३१ ॥

मीने जीवेऽल्पसन्तानं स्वराज प्रियधार्मिकः ।
ज्ञानशास्त्रार्थवान् रागी शान्तप्रकृतिमान् गुणी ॥ ४३२ ॥

जीवे कर्मगतेऽमात्यो मित्रांशे राजवल्लभः ।
बुधशुक्रांशगे क्लेशी राजन्यद्वेषकार्यवान् ॥ ४३३ ॥

कर्मे मन्दांशगे जीवे मन्दबुद्धिः सदाऽनृत ।
अनाचाररतोनित्य नीचारी बहुपापवान् ॥ ४३४ ॥

[6]स्वराजशत्रुनिकटे तत्कालस्नेहबुद्धिमान् ।
[7]मातृवंशजनद्वेषी ह्यन्तश्छिद्रविचारवान् ॥ ४३५ ॥

दिव्यश्रीनवरत्नकाञ्चन[8]महाहारादिलक्ष्म्यान्वित.
क्रीडाकौतुकनृत्यगीतसकलव्यापारदीक्षागुरु ।
ज्ञातिद्वेषकलापवान् स्थिरमति सद्रू[9]पमानान्वितो
जीवे कर्मगते भवेद्गुणनिधि सत्कर्मसुवारां निधि ॥ ४३६ ॥

---

1. च्युति
2. विचारवान् स्यात्
3. बलिष्ठ
4. स्वदृष्टिहीनं धननाशमेति
5. धान् स्यात्
6. स्वाजसमशत्रुत्व
7. मातुलांशे जनद्वपमन्त
8. वामाधारलक्ष्मीप्रिय
9. सद्भूत

चन्द्रे पूर्णबलोपेते [1]तद्राश्यधिपसंयुते ।
वयोमध्ये महाभाग्यं राजपुत्रप्रियः सुखी ॥ ४३७ ॥

मीने तुलांशगे जीवे [2]स्वराजस्य सुतत्रयम् ।
मातृष्व[3]सुः सुतस्ने[4]ही पितृव्यद्वेषवान् भवेत् ॥ ४३८ ॥

सूर्याष्टवर्गे नवमे [5]बिन्दुशून्ये प्रजायते ।
पितृव्यद्वेषमूलेन स्वपि[6]त्ररिष्टमादिशेत् ॥ ४३९ ॥

सूर्याष्टव[7]र्गे संशोध्य नक्षत्रस्थे निशाकरे ।
शन्यङ्गारकसंयुक्ते बाल्ये पितृमृतिर्भवेत् ॥ ४४० ॥

जननीव्याकुलं चैति पश्चाद्भ्रातृविहीनवान् ।
देशान्तरमहद्भाग्यं [8]दिवाकरदशासु च ॥ ४४१ ॥

संपूर्ण[9]बलराशीशदशायां च महत्सुखम् ।
राजयोगं च [10]लभते भाग्याधिपतिभुक्तिषु ॥ ४४२ ॥

सुखाधिपान्तरे काले धनकर्माधिपेषु वा ।
सत्कर्म[11]वाहनादीनां लाभो भवति नित्यशः ॥ ४४३ ॥

षष्ठाष्टमव्ययाधीशभुक्तिकाले शुभाशुभम् ।
लग्नाधिपान्तरे काले योगप्राबल्यमादिशेत् ॥ ४४४ ॥

एकद्वित्रिफलं[12] यस्मिं[13]स्तद्राशीशान्तरे यथा ।
अतीव क्लेशकर्याणि धनधान्यपशुक्षयम् ॥ ४४५ ॥

---

1. तद्राशिस्थे नराधिते
2. स्वराजन्य
3. ष्वसा
4. स्नेहं
5. शून्यांशेत्रि
6. पिता
7. वर्गे
8. सूर्ये वा महदायके
9. फलदायेश
10. महति
11. मथवा वाह
12. पदे
12. तद्राशिस्थान्तरे यथा

[1]बिन्दुपञ्चकयुक्तस्य राशीशस्यान्तरेशुभम् ।
यत्र कार्यार्थसिद्धिः स्याच्छ्रेयो योगानुसारतः ॥ ४४६ ॥

क्षेत्रद्वये फलाधिक्ये तद्युक्तौ शोभनं महत् ।
हीने हीनबलं चेति शून्ये शून्यफलं वदेत् ॥ ४४७ ॥

[2]द्वित्रिबिन्दौ कुजादीनां बिन्द्वाधिक्यवशात् फलम् ।
समे समफलं चेति [3]दशावाच्याष्टवर्गके ॥ ४४८ ॥

रविक्षेत्रे फ[4]लैर्हीने रविभुक्तिफलं वृथा ।
चन्द्रक्षेत्रे तथाविन्द्यादष्ट[5]वर्गेऽत्र योजयेत् ॥ ४४९ ॥

[6]पञ्चाधिकफले राशौ दशारंभंतु शोभनम् ।
निशाकराष्टके वर्गे योजयेत्कालवित्तमः ॥ ४५० ॥

भिन्नाष्टवर्गे रव्यादिग्रहाणां च पृथक् पृथक् ।
प्रस्ता[7]राष्टकवर्गेणनिशाकरफलं स्मृतम् ॥ ४५१ ॥

चन्द्रलग्नं शरीरं स्याल्लग्नं स्यात् प्राणसंज्ञिकम् ।
तावुभौ संपरी[8]क्ष्यैव सर्वनाडीफलं स्मृतम् ॥ ४५२ ॥

निशाकराष्टके वर्गे लग्नाधिपतिवर्गके ।
तत्तत्काल[9]दशादीनां फलानि परिचिन्तयेत् ॥ ४५३ ॥

मीनांशे मिथुने लग्ने मुद्रांशे[10] च जायते ।
[11]चन्द्रशोध्यावशिष्टक्षेदशायां भाग्यवान् सुखी ॥ ४५४ ॥

जन्मरमाधिपे [12]सौम्ये धने सिंहनवांशगे ।
अधैर्यप्रकृतिर्भीरुः किंचिद्रोगशरीरवान् ॥ ४५५ ॥

---

1. पञ्चमाधिगुणाधिक्ये राशीशान्यन्तरे शुभम् ।
2. त्रिद्वये तु कुलादीनि
3. दशाशेऽष्टकवर्गगे
4. लेहीने
5. मांशेऽ
6. पञ्चमाधिफलाधिक्ये दशारंभं च राशिषु
7. रबलमार्गेण
8. क्षेवा
9. फलाधीश
10. शास्यजातके
11. चन्द्रारशोध्यविशिष्टाथ
12. शारो रोसौम्ये

[1]विलग्नाधिपयुक्तस्य कर्मेशस्य दशा शुभा ।
कार्यान्ति[2]रेपु धीरोऽयं शत्रुहन्ता प्रतापवान् ॥ ४५६ ॥

जन्मलग्नांशदोषेण गोचरे[3]जन्मगे शनौ ।
सत्कर्म[4]दानयुक्तोऽपि स्वराजन्यातिवैरवान् ॥ ४५७ ॥

पौष्णश्रवणहस्तार्द्रा भरणी वायुमेष्वपि ।
[5]शनैश्चरश्चरन्नृणां दुर्भिक्षभयदः स्मृतः ॥ ४५८ ॥

वर्गोत्तमे तुलाचन्द्रे बिन्दुत्रयसमन्विते ।
पादाधिकफलं चेति विपद्दाये सुभाग्यशन् ॥ ४५९ ॥

तुलाशनौ म[6]हद्राष्ट्रे लोकेदुर्भिक्ष[7]जंभयम् ।
शत्रुभीतिमवाप्नोति पश्चात् सस्यं विनिर्दिशेत् ॥ ४६० ॥

स्वा[8]त्यां शनिस्थिते काले बन्धुनाशो भयप्रदः ।
विरोधजनमित्रत्वं[9]त्रिपुमासु मृगादिपु ॥ ४६१ ॥

मेषादि[10]त्रिपु मासेपु स्वशत्रुजननाशनम् ।
किंचिद् व्याकुलकार्याणि मिथुने स्वक्षमादिशेत् ॥ ४६२ ॥

मीनायने समारभ्य स्वकार्यफलं महत् ।
कुळीरायनगे सौख्यं तन्मध्ये व्याकुलं क्वचित् ॥ ४६३ ॥

वैशाखेऽर्कसुते काले शत्रुस्नेहं महत्सुखम् ।
यत्नकार्यानुकूलं स्यात् क्रूरमासं विना सुखम् ॥ ४६४ ॥

विपत्तारांशगे मन्दे गोचरे शत्रुनिग्रहम् ।
सम्पत्तारांशके भीति[11] विपत्तारे भयं महत् ॥ ४६५ ॥

---

1. विलग्नांशस्य योगेन कर्माधिपतिदायगे
2. रमहाधैर्य
3. स्वाति
4. दानगेनापि
5. शनैश्चिरचारस्त्रीणां दुर्भिक्षभयतास्मृतम्
6. महा
7. डाम्बरम्
8. स्वतीव
9. मकरादितिमासगे
10. मासत्रयगे
11. भीतिधिपत्प्राणभयं विपत्

क्षेमे व्याकुलकार्याणि स्वराज्ये कलहं व्यथा ।
प्रजापीडा मनस्तापो पाण्ड्यभूपति[1]विग्रहम् ॥ ४६६ ॥
संपदर्क्षे फलं चेति क्षेमतारे विनाशनम् ।
सम्पत्तारे क्षेमतारे मन्दाक्रान्तस्य कालगे ॥ ४६७ ॥
मण्डलाधिपतेर्मृत्युर्बन्धुक्लेशं विनिर्दिशेत् ।
जन्मकर्म तथाधाने पापाक्रान्तस्य कालगे ।
राजद्वारकलापेन व्याकुलं मनुरब्रवीत् ॥ ४६८ ॥
तदभावे देहजाड्यं स्वजना[2]देरुपद्रवम् ।
शुभग्रहाक्रान्तकाले शुभं भवति नित्यशः ॥ ४६९ ॥
पापाक्रान्ते मनस्तापं ग्रहोक्तगुरुमार्गतः ।
जातिवर्णानुगुण्येन फलं निश्चित्य बुद्धिमान् ॥ ४७० ॥
त्रिजन्माद्यष्टमर्क्षेषु पापाक्रान्तस्य कालगे ।
क्रूराब्दे क्रूरमासे च [3]ह्यतीव क्लेशमादिशेत् ॥ ४७१ ॥
शुभाक्रान्ते महत्सौख्यं राजप्रीतिधनागमम् ।
यत्नकार्यानुकूलं स्याच्छु[4]भदृष्टौ फलं भवेत् ॥ ४७२ ॥
विपत्प्रत्यग्जन्म सप्त पापाक्रान्ते[5] च कालगे ।
अतीव क्लेशकार्याणि [6]त्वष्टमर्क्षे विशेषतः ॥ ४७३ ॥
ताराबलानुकूलर्क्षे शुभाक्रान्ते[7] च कालगे ।
शुभमेव फलं सत्यं धनलाभं विनिर्दिशेत् ॥ ४७४ ॥
लाभाधिपाक्रान्तमासे द्रेक्काणांशे[8] च मासगे ।
[9]शुभदृष्टियुते मासे विशेषेण धनागमः ॥ ४७५ ॥

—:*:—

1. विड्वरम्
2. जनादि
3. अतीव
4. दृष्टिमार्गे
5. मन्तस्य
6. अष्ट
7. मन्तस्य
8. शस्य
9. दृष्टमासे विशेषं स्याद्धनलाभमिदं स्मृतम्

## जन्मर्क्षवारसंबन्धफलानि ।

जन्मर्क्षेशुभखेटवारसहिते नानार्थसौख्यं वदेत्
देहार्तिं नृपकोपचित्तचलनं पापग्रहाणां दिने ।
सञ्चारं नृपकोपवाक्यविपदं भानोर्दिने जन्मभे
सौख्यं सोमदिने विचित्रकुसुमप्रेमारतिं भोजनम् ॥ ४७६ ॥

दुःख भौमदिने स्वनाशकलहं देहार्तिपादभ्रमं
सौख्यं सोमजवासरे मधुघृतं विद्याश्रवं सौख्यदम् ।
वस्त्राप्तिं गुरुवासरे फलमधुद्रव्याप्तिदेवोत्सवं
शुक्रेभूषणमङ्गनारतिसुखं श्रीगन्धनानाम्बरम् ॥ ४७७ ॥

दुःखं क्लेशभयावहं शनिदिने भृत्यापदं जाड्यतः ॥ ४७८ ॥

पष्ठाष्टमाधीशवारे देहजाड्यंस्वभुक्तिषु ।
क्रूरमासे देहजाड्यं सर्वनाडीफलं स्मृतम् ॥ ४७९ ॥
अन्तर्दशाधीशवारे दशाधिपनिवासरे ।
देहजाड्यारम्भमेति योजयेत् कालवित्तम. ॥ ४८० ॥

पापग्रहे नीचविमूढभागे
पराजिते शत्रुगृहस्थिते वा ।
तत्पाकजन्यं फलमेव [1]शून्यं
करोति खेटो न शुभेक्षितश्चेत् ॥ ४८१ ॥

जन्मर्क्षे नृपकोप[2]वित्तचलनं नानार्थदुःखापदम्
[3]ऋक्षे संपदि वित्तसौख्यविभवं भूपादिनानाम्बरम्
गोभूम्यर्थविनाशनं [4]विपदिभे सन्तापनं देहरुक्
जाड्यं बन्धुवियोगमृत्युकरं स्वाकस्मिकं कोपनम् ॥ ४८२ ॥

---

1. जन्य
2. ं शुभफल
3 दारिद्रसौख्यविभवं गुरुशुक्रम्य( च यदि ।
4. नृपनिभे

[1]क्षेमेक्षेमकरार्थसौख्यसुखभुग्दृतागमंभोजनं
राज्ञाक्रोधधनार्तिकार्यविकलं दु:खं तथा [2]प्रत्यरे ॥ ४८३ ॥
सिद्धिं साधनभे सुतार्थविजयं भूम्यर्थमाल्याम्बरं
नानादु:ख[3]करत्रिदोषजनितामृक्षे वधे कष्टताम् ।
मैत्रे मित्रसमागमं नृपकु[4]लात् सम्मानने भूषणं
यानारोहणमेव कर्मनिरतं शय्यासुखाप्तिं वदेत् ॥४८४ ॥
अत्यन्तं परमित्रभे नृपरतिं सद्गोष्ठिविद्यारतिं
राजाज्ञापरिपालनं सुतसुहृद्धन्धागमं कौशलम् ।
अन्त्यर्क्षे परमित्रभेचनृपतीस्त्रीपुत्रचिन्ताज्वरं
संचारं [5]कफदोषभुक्ति[6]विरतिं शय्यासनार्तिं भृशम् ॥ ४८५ ॥
कर्मर्क्षे दधिसूपगोऋषिमनोधैर्यं [7]मनोनिग्रहं
स्वाधाने नृपकोपचित्तचलनं यानार्थ[8]भूनाशनम् ।
वैनाशे रिपयावहं सुत[9]सुहृद्दारार्थभूपार्दितं
संघाते नृपशत्रुचोरविषमस्थाना[10]दिभूत्यार्दितम् ।
एवं प्रत्यहमादराद् क्षितिभुजामाश्चर्यहे[11]स्वात्मकं
दैवज्ञः प्रवदेत्तथैव सकलं तावद्भवेन्नान्यथा ॥ ४८६ ॥
[12]ताराबलविहीनर्क्षे मन्दाक्रान्ते [13]तथैव च ।
अतीव क्लेशकार्याणि क्रूरमासे [14]वदन्ति हि ॥ ४८७ ॥
[15]राहुणाक्रान्तराशीशक्रूरवेधमहान्तरे ।
राजशत्रुभयं रोगं निर्दिशेत् कालवित्तमः ॥ ४८८ ॥

---

1. क्षेमे
2. प्रत्यये
3. कलित्रदोषतनुरुग्
4. पुरात्
5. कलि
6. निहति
7. महद्वैरतां
8. भुक्त्याहतिम्
9. तनु
10. नार्ति
11. हेयो
12. तारा
13. स्य फालगे
14. भविष्यति
15. राहुक्रान्तक्रौ थीधौ

अन्यान्तरे चोरभयं गृहोपकरणा[1]दिनाम् ।
नाशेन क्लेशमाप्नोति [2]स्वर्णनोर्दायके तथा ॥ ४८९ ॥

ऋण[3]चोरादिपीडां च मणोपद्रवरुग्भयम् ।
शन्याराक्रान्त[4]राशीशदशायान्त[5]र्दशासु च ॥ ४९० ॥

ऋण[6]चोरादिपीडां च मणोपद्रवमादिशेत् ।
शुभग्रहाक्रान्तदशाये शुभं भवति नित्यशः ॥ ४९१ ॥

पापग्रहाक्रान्तदाये वदेत् पापफलं [7]तथा ।
रन्ध्राधिपाक्रान्तदाये [8]न्यपेशाक्रान्तभुक्तिषु ॥ ४९२ ॥

अपमृत्युभयप्राप्तिः स्वजनारिष्टशोकवान् ।
मन्द[9]मान्दिगतराशिरन्ध्रपा-
स्तन्नवांशपतयोऽपि ये ग्रहाः ।
तेषु दुर्बलदशासु विपदाः
कष्टमे[10]चरति सूर्यनन्दने ॥ ४९३ ॥

—:=:—

## लग्नादिद्वादशभावसंज्ञाः ।

[11]लग्नात् स्वकीर्तितनुरूपगुणस्वभावाः
स्वर्णादिलोचनकुटुम्बमुखाशनानि ।
भ्रातृमभावबलवीर्य[12]करोरुकर्ण-
दस्रसख्यादिसुखमन्दिरयानभोगान् ॥ ४९४ ॥

---

1. करणानि च
2. स्वर्णानुगमनसुते
3. चोरग्रहादि
4. शे चरे
5. दशेषु
6. चोरग्रहादि
7. भिः
8. न्येषा
9. मन्द...शः चोद
10. ऽपि
11. मूर्ध्निमुखि
12. करो

कुक्षिप्रदेशमतिपुलभु[1]जादिशिष्य
 साप[2]त्नशत्रुव्रण[3]रोगविधं च नाभिम् ।
[4]स्त्रीवस्तिमूत्रमदमन्मथतरपमार्गाः
 [5]रन्ध्रापवादमरणाशुचिगुह्यरोगाः ॥
[6]श्रीधर्मदेवशुभभाग्यगुरुस्तपांसि
 [7]मानप्रवासक्रतुवृत्तियशोऽभिमानात् ॥ ४९५ ॥
[8]मेपूरणांस्पदजयादि च जीवनानि
 [9]निर्विघ्नसिद्धिविभवंभव कर्णदेशौ ।
विघ्नार्थनाशशयनादि[10]सुखं च नारीं
 लग्नादितः सुमतिमान् कथयेत् फलानि ॥ ४९६ ॥
[11]खेटो फलसदृशवीर्यसमन्वितश्चे-
 द्भावपो यदि तदाशुभमन्यथा स्यात् ।
तद्भावकारकफलानि [12]च चिन्तयित्वा
 योगानुगुण्यफलमत्र विचारणीयम् ॥ ४९७ ॥

—:*:—

## जलांशकगतगुरुफलानि ।

कुंभे जलांशगे जीवे मुद्रांशे निशाकरे ।
स्थिरलग्ने प्रजातस्तु[13] ज्येष्ठभ्रातृसमन्वितः ॥ ४९८ ॥

---

1. भुजस्य
2. सापत्य
3. मत्र नाभिः
4. स्त्रीव
5. रन्ध्रा गुरुपरिपुवीक्षण
6. स्त्री
7. इष्टि प्रवासपरिपूर्तियशोऽभिमानम्
8. आशामरत्व पयौरपमात्मशयस्याः
9. निर्विघ्नप्राप्तिफलंशभवकर्णदेशम्
10. सुरताश्च
11. खेटं फलं तद्दशवीर्यसमन्वितं चेद्
12. चिन्त्यमेति
13. प्रजातस्य

श्यामवर्णशरीरश्च [1]त्वग्रहारे निवासवान् ।
व्यवसायपरो नित्यं [2]सोदरैश्च समन्वितः ॥ ४९९ ॥

जलांशगे देवगुरौ प्रसिद्धो[3]
सुभूषणो बान्धववत्सलश्च ।
सहोदरी[4]भर्तृवशात् सुभाग्यं
स्वबन्धुमूलाद्धनवान् प्रभुश्च ॥ ५०० ॥

स्त्रीप्रजः सुभगः कान्तः[5]स्वल्पविद्यार्थकोविदः ।
बाल्येऽल्पसुखवान् कामी पुत्रशोकेन कर्शितः ॥ ५०१ ॥

ख्यातः प्रावीण्यवान् वीरस्तेजस्वी स्वजनप्रियः ।
प्रच्छन्नपापी दुष्टात्मा क्रोधी साहसकृत्यवान् ॥ ५०२ ॥

उत्त[6]रप्रथमे पादे कुन्तलांशे निशाकरे ।
सदाचारविशेषज्ञः श्रीमान् बन्धुप्रियः सदा ॥ ५०३ ॥

तुलांशगे देवगुरौ घटस्थे
केन्द्रत्रिकोणेऽपि च [7]संस्थिते वा ।
प्रियंवदः सौम्यशरीरयष्टी
रोगी सदा मित्रजनप्रियश्च ॥ ५०४ ॥

परकार्यकृत्[8]प्राज्ञो नृपकोशाधिपत्यवान् ।
सप्तविंशात् परं भाग्यं त्रिंशाब्दे वा सुकीर्तिमान् ॥ ५०५ ॥

कुन्तलांशे घटे चन्द्रे त्रिग्रहेण समन्विते ।
चित्रिण्यंशे प्रजात[9]स्तु कामी दुष्टस्वभाववान् ॥ ५०६ ॥

---

1. अग्र
2. सोदरभ्रातृभ्रातृमान्
3. प्रसिद्धो स्वविग्रहे
4. भ्रातृ
5. अल्प
6. उत्तरे
7. यः प्रसिद्धः
8. ज्ञातः इत्य
9. प्रजातस्य

वित्तलाभाधिपौ केन्द्रे भाग्यकर्मेश[1]संयुतौ ।
बन्धुमूलात् [2]सुपूज्यश्च राजसेवी [3]सुरूपवान् ॥ ५०७ ॥

कोशाश्व[4]यान उद्योगं सर्वदा धनलाभवान् ।
स्वभुजार्जितसंपन्नो विप्रपूज्यः प्रतापवान् ॥ ५०८ ॥

चतुर्थगे [5]वैर्यधिपप्रसन्ने
स्वबन्धुसंयोगस्वकार्यदक्षः ।
पित्तज्वराजीर्णशरीरकार्श्ये
जलांशगे देवगुरौ दयालुः ॥ ५०९ ॥

लग्नेशे स्वोच्चराशिस्थे लग्ने [6]राहौ शनीक्षिते ।
विपद्दाये मनस्तापं [7]मेहरोगादिसंभवम् ॥ ५१० ॥

[8]कीटांशगे घटे चन्द्रे [9]त्वसितेननिरीक्षिते ॥ ५११ ॥

कुन्तलांशे प्रजातस्तु[10] देहकार्श्यप्रपी[11]डितः
लाभाधिपदशाकाले लाभाधिपतिभुक्तिषु ।
धनाधिपान्तरे काले विवाहोत्सवमादिशेत् ॥ ५१२ ॥

सुखाधिपदशाकाले धनाधिपतिभुक्तिषु ।
चित्रिण्यंशे प्रजातस्य विवाहोत्सवमादिशेत् ॥ ५१३ ॥

दारेशांशकगे मासे सुखेशांशस्य मासगे ।
[12]जन्मदेशं परित्यज्य सम्पद्दाये विवाहवान् ॥ ५१४ ॥

तदंशे तत्त्रिकोणे वा स्फुटयोगं गते गुरौ ।
शुक्रांशमास उद्वाहं केचित्पश्चे द्विमार्यकः ॥ ५१५ ॥

---

1. संयुते
2. सुपूज्यं च
3. स्व
4 लाभ
5. वैरिभयप्रपन्नैः
6. राहु
7. योग
8. सिंहांश
9. अगितेन
10. प्रजातस्य
11. पीडवान्
12. जन्मदायी देशत्यागी

वर्गोत्तमे दारनाथे सत्कलत्र[1]युतः सुखी ।
देशान्तरे महद्भाग्यं लाभाधिपतिदायके ॥ ५१६ ॥

राहुभुक्त्यन्तमारभ्य गुरुभुक्तौ शुभाधिकम् ।
शन्यन्तरे व्याकुलं स्यात् त्रिंशोपरि विशेषतः ॥ ५१७ ॥

रन्ध्राधिपदशान्त्यादिविपद्दाये दशा[2]व्ययाम् ।
स्वबन्धुसहितं क्लेशं योगमंत्र विनिर्दिशेत् ॥ ५१८ ॥

लाभाधिपदशाकाले योगः स्याद्द्वित्रिवत्स[3]रम् ।
पश्चात् क्लेशं [4]च लभते स्वस्थानेऽल्पसुखान्वितः ॥ ५१९ ॥

पञ्चत्रिंशात् परं सौख्यं विपद्दाये श्रियायुतम् ।
बन्धुमूलात् सुभाग्यासि पुत्रोत्पत्तिविनाशवान् ॥ ५२० ॥

लग्नात् सप्तमगे मन्दे पुत्रनाशेन कर्शितः ।
स्त्रीप्रजा दीर्घमायुष्यं स्थिरल[5]ग्ने च जायते ॥ ५२१ ॥

लग्नात् सप्तमगे मन्दे चोच्चग्रहसमन्विते ।
शुभदृष्टिविही[6]ने च योगो यमलनामकः ॥ ५२२ ॥

उच्चयोगे महापापी परहिंसार्थवञ्चकः ।
नीचकृत्यपरो नित्यं ब्रह्मघातकपापवान् ॥ ५२३ ॥

[7]तत्पापवशतो रोगी पुत्रनाशेन कर्शितः ।
लग्ने [8]राहौ प्रजातस्तु घातकः पापचेतनः ॥ ५२४ ॥

गुरुचण्डालयोगोऽपि पापकृत्य[9]शठः परः ।
कुंभे जशांशगे जीवे कुन्तकांशे निशाकरे ॥ ५२५ ॥

चन्द्रलग्नाष्टमाधीशदशायां पितृनाशनम् ।
मातानुमरणं चैति योगकाले न संशयः ॥ ५२६ ॥

---

1. प्रदः　　2. यथा
3. वत्सरे　　4. प्रकुर्वित
5. लग्नमन्त्रकके　　6. हीनश्च
7. तस्य पापवशाद्रोग　　8. राहुप्रजातस्य　　9. पार्वे स्तुवन्

सौम्यशाये तृतीयेशे पितृभ्रातृविनाशवान् ।
बन्धुमूलात्तु सन्तोषं कनिष्ठभ्रातृमान् सुधीः ॥ ५२७ ॥
देशान्तरे ज्येष्ठभ्रातृबहुसंचारमादिशेत् ।

जलांशगे देवगुरौ घटस्थे
देशान्तरे भ्रातृवियोगदुःखम् ।
तावाग्निकामृत्युभयं [1]तदैव
कालान्तरे पुत्रवियोग[2]दुःखम् ॥ ५२८ ॥

जलांशगे देवगुरौ क्षयरोगेण कर्शितः ।
तुलाशनौ मृतिं चैति पुत्रशोकेन कर्शितः ॥ ५२९ ॥

—:*:—

## रव्यादीनांगोचरयुक्तदशाफलानि ।

षट्त्रिदशस्थो भानुश्च[3] दशाय जन्मसप्तगः ।
[4]शीतांशुश्च तथा चैव षट्चतुर्थाष्टगतो ज्ञः ।
गुरुर्द्विद्विनवपञ्चमे शुभफलप्रदः ॥ ५३० ॥

एकादशे ग्रहाः सर्वे गोचरे शुभदाः स्मृताः ।
यद्यमेशोनयुतोऽपि [5]तत्स्थो दृष्टोऽथवा तस्यविरचदासात्[6] ।
योगद्वयं स्यात्पने यदेको योगस्तथा मृत्युसमत्वमाहुः ॥ ५३१ ॥

विषविद्यानिःस्वपतिकुशिरोगं महद्भयम् ।
शत्रुशयं महार्थैर्मरणं देहशोषणम् ॥ ५३२ ॥
पीडां हानिं च नष्टं च मनोग कुरुते शनिः ।

जन्मस्थितो रविसुतः कलहं विवादं
वित्तार्थनाशमरिपीडनमाशु धत्ते ।

1. मेत
2. पर
3. षट्त्रिदशजन्मत्रिगागः ।
4. शीतांशुरिषट्दशचतुर्थ [illegible]
5. तस्पर्दे
6. अपि

धैर्ये तु मुक्तिसुखमात्मजबन्धुसौख्यं
युद्धे जयं विविधसौख्यमनोभिलापम् ॥ ५३३ ॥

बन्धौ सुहृत्सुतविनाशन[1]मर्थनाशं
पश्वादिभूमिकृषिनाशनमानहानिम् ।
पुत्रे मतिभ्रममनेकविचारशल्यम्
षष्ठे धनागममतीव सुखातिमाहु. ॥ ५३४ ॥

कामे तु दारसुतभृत्यविनाशमेति
रन्ध्रे विनाशनमरिव्यसनं कृशार्तिम् ।
धर्मे तु पापनिरतं शुभभाग्यनाश
माकस्मिकं कृपणबुद्धिरतिक्रियार्तिम् ॥ ५३५ ॥

सत्कीर्तिनाशकलिदोषभयं च माने
लाभे धनातिमतिसौख्यनृपाभिषेकम् ।
रूपाङ्गनाशमतिदुस्तरकोपजालं
भृत्याव[2]मानमतिरोगशरीरतापम्
एवं विलोक्य सहसा फलमत्र चिन्त्यं
लग्नाधिपस्य[3] मतिमान् कथयेत् फलानि ॥ ५३६ ॥

चन्द्रलग्नाद्गुरुस्थाने [4]यातो सूर्यसुतो यदि ।
पित्रोर्नाशं [5]वदेत् काले वीक्षिते वात्र संयुते ॥ ५३७ ॥

रविद्रेक्काणगे मन्दे [6]स्वंशे वा द्वादशांशके ।
गोचरे क्रूरमासेषु पितृपीडां विनिर्दिशेत् ॥ ५३८ ॥

व्ययेशांशे स्वराज्येषु कलहं पुत्रनाशनम् ।
सुखेशांशे भूपतिश्च क्लेशं प्राप्नोति भूरिशः ॥ ५३९ ॥

तत्तद्भावाष्टमेशांशे दुष्टाक्रा[7]न्ते च राशिगे ।
तद्भावाष्टदशाकाले तत्तद्भा[8]वस्य नाशनम् ५४०

---

1. नष्ट
2. भृत्यानमान
3. पः सुम
4. याने
5. तथा
6. अंशे
7. क्रन्तस्य
8. भावावना

दशानुकूलकाले तु योजयेत् कालवित्तमः ।
लग्नाद्वा चन्द्रलग्नाद्वा लाभेश[1]स्य दशान्तरे ।
मातृपीडा मनस्तापं लग्नाधिपतिदायगे ॥ ५४१ ॥

व्ययाधिपान्तरे वापि कर्माधिप[2]दशासु च ।
कर्माधिपदशाकाले मातुलप्रबलात् सुखम् ॥ ५४२ ॥

धनाधिपस्तथा विन्द्याद्विक्रमाधिपतिस्तथा ।
सुखाधिपे मातृपीडा [3]लाभाधिपदशातया ॥ ५४३ ॥

लाभेशांश[4]पतेर्भुक्तौ स्फुटयोगांशगे शनौ ।
स्वमातुलसुतादी[5]नामरिष्टमिति चादिशेत् ॥ ५४४ ॥

सर्वनाडीफलं सत्यं योजयेत् कालवित्तमः ।
माने जीवे शुभांशस्थे स्वक्षेत्रे राजवल्लभः ॥ ५४५ ॥

स्वदशायां महत्सौख्यं धर्मसिद्धिसुखावहम् ।
मीने जीवे तुलांशस्थे लक्ष्मीपदर्यंशजे[6] तथा ॥ ५४६ ॥

विशालवदनोद्योगी प्रियदारः सुखी रतः ।
श्यामवर्णगुणश्लाघी कुशलः कुक्षिरोगवान् ॥ ५४७ ॥

पितृन्वधुः[7] कुले भाग्यं सत्पुत्रप्रियवान् सदा ।
धनान्त[8]रपुरीवासी वातप्रकृतिदेहवान् ॥ ५४८ ॥

श्राद्धकार्यरतो नित्यं लोभप्रकृतिशान्तिवान् ।
धर्मपुण्यरतोऽभिज्ञो विद्यावान् सरसप्रियः ॥ ५४९ ॥

दयाशीलानधर्मात्मा देवब्राह्मणपोषकः ।
बन्धुप्रियकरो नित्यं हरिहरभक्तिमान् ॥ ५५० ॥

मिताशी गूढकृत्कामी भीरुर्गम्भीरबुद्धिमान् ।
वयोमध्ये महद्भाग्यं बाल्ये क्लेशदरिद्रवान् ॥ ५५१ ॥

---

1. शप
2. दशेऽपरा
3. लाभेषु गतः
4. पतौ शुभे
5. दीनि अरिष्ट
6. कजे
7. बला
8. तन्रे पुरीव

पश्चाद्भ्रातृविनाशी[1] च मातृवंशजनप्रियः
मातामही [2]दीर्घजीवामातुलप्रियवान् गुणी ॥ ५५२ ॥

सीमन्तपुत्रवान् रोगी [3]द्युद्वाहानन्तरं सुखी ।
स्वभुजार्जितसंपन्नो राजद्वाराधिकारवान् ॥ ५५३ ॥

विपद्दाये शुभाग्यातिर्भाग्याधिपतिभुक्तिषु ।
नरवाहनभूपालियों[4]गः षोडशवत्सरम् ॥ ५५४ ॥

त्रिंशोपरि सुपुत्राप्तिः सुताधिपतिभुक्तिषु ।
रमाधिपान्तरे काले पुत्रिका[5]जननं भवेत् ॥ ५५५ ॥

वर्गोत्तमे तुलाचन्द्रे शन्यङ्गारकसंयुते ।
स्वमा[6]तुर्नेत्रवैकल्यं पितृभ्रातृविरोधवान् ॥ ५५६ ॥

मातृष्वसैका सुगुणा भूप[7]तेर्भोगशालिनी ।
उद्वाहकाले कलहं जन्मदेशे विवाहवान् ॥ ५५७ ॥

दारेशेलक्ष्मिपषष्ठेशे सम्पद्वारदशान्त्यगे ।
विपद्दायेऽथवा चेति स्वभुक्तौ पाणिसंग्रहः ॥ ५५८ ॥

दारेशे लक्ष्मीपषष्ठेशे भद्रांशे[8] च जायते ।
स्वजन्मदेश उद्वाहं [9]पितरिष्टकलत्रवान् ॥ ५५९ ॥

शुक्रेपावत्फलानि[10] स्युश्चन्द्राज्जामित्रगेऽथ वा ।
[11]दारेशे स्वोचराशिस्थे द्वित्रिसंख्याश्च[12] जीविताः ॥ ५६० ॥

स्वपि[13]तुः सोदराः सप्त [14]अथवा द्वित्रिरेव च ।
[15]पितृव्यौ दीर्घजीवौ च सोदरद्रोहपापवान् ॥ ५६१ ॥

---

1. नाशश्च
2. सुदीर्घायुः
3. उद्वाह
4. योग
5. लग्नाद्दिशेत्
6. स्वमातरि
7. भूपतिः
8. पंचास्य जातके
9. पिता
10. स्यान्ति
11. स्वदारेशोच
12. चिरायुषः
13. पिता
14. अथ
15. पितृभ्रातृद्वयम् पुंत्वं

मातामहीविना[1]शः स्यात् सम्पदाये दरिद्र[2]कः ।
सुहृदांशे पूर्वभागे मातुलौ द्वौ द्विभार्य[3]कौ ॥ ५६२ ॥

विपदाये सुभाग्यासिर्मातुलप्रबलं सुखम् ।
मातृष्व[4]सुः सुतस्थाने जीवे पूर्णबलान्विते ॥ ५६३ ॥

[5]तस्यापुत्रोः दीर्घजीवी गजान्तैश्वर्यभूमिराट् ।
बहुस्त्रीनायकः श्रीमान् पुत्रपुत्रीसमृद्धिमान् ॥ ५६४ ॥

मातृवाक्यरतो नित्यं भेदभ्रातृसमन्वितः ।
कर्माधिपदशाकाले य इदं फलमश्नुते ॥ ५६५ ॥

जातकस्यसुवाहादित्साराब्दानन्तरं शुभम् ।
नूतनगृहनिर्माणं हस्तिलाभं शुभावहम् ॥ ५६६ ॥

लग्नाधिपान्तरे काले राजन्यजन[6]निग्रहम् ।
सर्वाध्यक्षाधिकाराप्तिं गेहे लक्ष्मीकटाक्षवान् ॥ ५६७ ॥

स्वोच्चांशे तीव्रगे भौमे [7]चोरद्रेष्काणसंयुते ।
[8]लग्ने च मिथुने जात श्चोरापद्रवनिचवान् ॥ ५६८ ॥

लग्नात् पञ्चमगे मन्दे दारेशांशस्य भागके ।
राजन्योद्वाहकष्ट[9]दः शस्त्रभीतिर्मनोव्यथा ॥ ५६९ ॥

दशाधिपेऽरिरन्ध्रेशदुःस्थानमदभुक्तिषु ।
स्वराजन्यजनद्वेष शत्रुनाशात् परं सुखम् ॥ ५७० ॥

षष्ठाष्टमाधीशभुक्तौ नक्षत्राधिपनेत्रथा ।
शत्रुभीतिर्मनस्तापमन्तरिन्द्रमयं कचित् ॥ ५७१ ॥

---

1. विनाशं
2. दरिद्रवान्
3. मन्देवान्
4. स्वसा
5. मातृस्वसापुत्रपुत्री
6. मोदम्
7. चोराद्रेष्काणे ।
8. मिथुने [illegible]
9. कष्ट

चन्द्रांशराशिगे मन्दे गोचरे जन्मगेऽथवा ।
शत्रुराजभयं किंचिच्छान्त्याशान्ति प्रयास्यति ॥ ५७२ ॥

वनदुर्गप्रदानेन शत्रुस्नेहं महत्सुखम् ।
मुद्गरांशे प्रजातस्य पर[1]शोर्दानमाचरेत् ॥ ५७३ ॥

शत्रुवर्गकुलच्छेदं कुठारेश्वर [2]साधय ।
मम शत्रुक्षयार्थाय तव पूजां करोम्यहम् ॥ ५७४ ॥

शत्रुवंशक्षयार्थाय सर्वाभीष्ट[3]प्रदाय च ।
मयापमृत्युनाशाय कुठारं प्रददाम्यहम् ॥ ५७५ ॥

कर्माधिपदशाकाले वेधकुम्भइमुक्तिषु ।
स्वराजन्यविरोधेन मनश्चाञ्चल्यभीतिमान् ॥ ५७६ ॥

पूर्वोक्तदानमन्त्रेण शत्रुस्नेहं शुभा[4]वहम् ।
[5]राज्ञामन्तःपुरे देशे विलम्बेन प्रजावति ॥ ५७७ ॥

[6]तद्द्वारा प्रबलं क्लेशमन्तरिछदं मह[7]द्भयम् ।

स्वराजसामन्तनृपालशोकं
[8]तद्राज्यमन्त्रिप्रमुखैश्च हानिम् ।
शुकान्तरे राज्यकला[9]जन्य
विपद्दशायां फलमाहुरार्याः ॥ ५७८ ॥

स्वबन्धुजनसन्तापं सामन्तनृपदर्शनम् ।
स्वमातुलकलत्रा[10]दे: पुत्रिकाजाड्यमादिशेत् ॥ ५७९ ॥

---

1. परशु
2. धारया ।
3. ष्टायसिद्धये
4. शुभम्
5. ...न्तर्वर्गपुरेदेशे
6. तद्द्वारिप्रमुखैः
7. द्विपद्
8. तद्वारिमुख्यप्रथितैश्च हानिः
9. मेति
10. कलत्रादि

तुलाशनिस्थिते काले लोके दुर्भिक्ष[1]जं भयम् ।
तुलान्ते कलहं चेति [2]द्यादायादधिकव्ययम् ॥ ५८० ॥

देहालस्यं [3]च लभते गोचरे वृश्चिके शनौ ।
लग्नाधिपे रिपुस्थाने तदिशे रिपुराशिगे ॥ ५८१ ॥

रन्ध्राधिपेन संयुक्ते [4]गुल्मरोगप्रपीडितः
लग्नाज्ज्ञामित्रगे शुक्रे [5]ह्यसितेन युतेक्षिते ॥ ५८२ ॥

[6]रक्तवातज्वरं चैव मूत्ररोगप्रपीडितः ।
तद्दोषपरिहारार्थं भानुवारव्रतं चरेत् ॥ ५८३ ॥

द्वादशादित्यनामानि हरिवारे प्रपूजयेत् ।
रक्तवस्त्रप्रदानेन देहारोग्यं शुभावहम् ॥ ५८४ ॥

[7]अर्करूपं सुवर्णेन शक्त्या कल्पोक्तमार्गतः ।
सम्यक् पूजां तथा कृत्वा दानमन्ते च कारयेत् ॥ ५८५ ॥

दिवाकर नमस्तुभ्यं पापाज्ञानप्रणाशन ।
त्रयीमयार्क[8]विश्वात्मन् गृहाणार्घ्यं नमोऽस्तुते ॥ ५८६ ॥

द्वादशादित्यवारान्ते मण्डलान्ते च वा यदि ।
दिवाकरप्रसादेन देहारोग्यं न संशयः ॥ ५८७ ॥

निराहारो वर्षमेकं फलाहारस्त्रिवर्षकम् ।
जीवे सूर्यान्तरे काले राजद्वारे कचिद्भयथा ॥ ५८८ ॥

---

1. डावरम्
2. आदा
3. प्रकुर्वीत
4. उदरामयरोगवान्
5. असे
6. मद्योष्णवातरोगादिविण्मूत्रोपद्रवदेहवान्
7. सुवर्णेन यथाशक्त्या कल्पोक्तविधिमार्गतः ।
   ध्यानमावाहमादीनि पूजादानं समाचरेत् ॥
8. विश्वात्मा

[1]पश्चाद्रोगस्य शमनं चन्द्रभुक्तौ शुभाशुभम् ।
[2]अजीर्णज्वरातिसारेण देहायासं विनिर्दिशेत् ॥ ५८९ ॥

ज्ञातिवर्गे मनस्तापं देहायासं मनोव्यथां ।
शुक्रान्तरे तथा विन्द्यात् सूर्ये ज्ञातिधनाधिपः ॥ ५९० ॥

स्वराजवंशे सन्तापं स्वमित्रजननाशनम् ।
कुजान्तरे पुत्रपी[3]डां पुत्रिकोद्वाहसंभ्रमम् ॥ ५९१ ॥

राहुभुक्तौ[4] दारपीडां पितृवंशे मृतिर्भवेत् ।
चन्द्रान्तरे जीवदाये क्रूरमासे स्वमातुल[5]ः ॥ ५९२ ॥

शीतज्वरभयमा[6]प्ति जननीव्याकुलं महत् ।
जीवांशनाडीयोगेन जातकस्य महत्सुखम् ॥ ५९३ ॥

पुत्रोत्सवसुतोत्पत्तिर्गृहे कल्याणसंभ्रमः[7] ।
पश्चाद्व्याकुलका[8]र्ये च राजद्वारे शुभाशुभम् ॥ ५९४ ॥

कर्माधिपदशाकाले धनाधिपतिभुक्तिषु ।
स्वधर्मोऽथ सुसन्ता[9]ने सीमन्तोत्सवसंभ्रमम् ॥ ५९५ ॥

व्ययाधिपान्तरे काले [10]त्वादौ व्याकुलमादिशेत् ।
मध्ये सुसौख्यमूपा[11]प्तिं स्वराजज्ञातिनाशनम् ॥ ५९६ ॥

विक्रमेशान्तरे काले राजकार्यवशाद्व्यथा ।
भाग्याधिपान्तरे सौख्यं योगं रन्ध्राधिपान्तरे ॥ ५९७ ॥

दा[12]राधिपदशासन्धौ[13] दारनाशेन शोकवान् ।
स्त्रियोद्वाहसौख्यं स्या योगप्राबल्यवान् सुखी ॥ ५९८ ॥

---

1. पश्चात्स्वस्थानमाप्नोति
2. अतिसारज्वरजीर्णादि
3. पीडा
4. फले चेति दारपीडां विनिर्दिशेत्
5. मातुलम्
6. प्राप्ति
7. भ्रमम्
8. कार्याणि
9. सन्ताने
10. त्वादौ
11. भूपाप्तिः
12. दारा
13. धनधर्माधिपस्य

व्ययेशाक्रान्तभवने क्लेश वा तत्रिकोणगे ।
स्फुटयोग गते पापे पुत्रपीडां विनिर्दिशेत् ॥ ५९९ ॥

स्वराजराष्ट्रे कलह तत्सामन्त[1]नृपेषु वा ।
राजान्तरमिति प्रोक्त व्यये[2]शस्यान्तरे तथा ॥ ६०० ॥

भाग्येशांशे तत्त्रिकोणे स्फुटयोग गते शनौ ।
सामन्तराज्ये कलह स्वप्रभोश्च सुखाधिकम् ॥ ६०१ ॥

केतुकान्तांशगे मन्दे [3]स्वदेहे जायते गद [4]
विण्मूत्रदेहबाधा[5]दे. क्षिप्रेणारोग्यमादिशेत् ॥ ६०२ ॥

भाग्याधिपदशाकाले स्वभुक्तौ व्याकुल महत् ।
एकोनचत्वारिंशाब्दे स्वप्रभोश्च मनोव्यथा ॥ ६०३ ॥

चत्वारिंशात् परं भाग्य गेहे कल्याणसभ्रमम् ।
भाग्याधिपदशाकाले लग्नाधिपतिभुक्तिषु ॥ ६०४ ॥

दारान्तरेषुतप्राप्ति राजप्रीतिर्धनागम [6] ।
केतुभुक्तौ मनस्तापं शुक्रभुक्तौ शुभाधिकम् ॥ ६०५ ॥

सूर्यान्तरे राजकार्यं [7]कलत्रात्मजपीडनम् ।
मन्दे सूर्यान्तरे काले योगभङ्ग विनिर्दिशेत् ॥ ६०६ ॥

नानाव्याकुलकार्य[8] च चन्द्रभुक्तौ शुभाशुभम् ।
भौमान्तरे व्याकुलं स्याच्छुभकार्यवशाद्व्यथा ॥ ६०७ ॥

मन्दे भौमान्तरे काले [9]निरोधं बन्धुभि सह ।
[10]ज्वरस्य पीडयात्यास मन क्लेश विनिर्दिशेत् ॥ ६०८ ॥

---

| | | | |
|---|---|---|---|
| 1 | नृपावधि | 2* | व्ययेशांशफल स्मृतम् |
| 3 | स्वदेशे | 4 | गदम् |
| 5. | बाधादि | 6 | गमम् |
| 7 | स्वदारादिसुतामयम् | 8 | कार्याणि |
| 9 | बन्धुनिह्रामोदिशेत् | 10 | देहायासज्वरादीनि |

राहुभुक्तौ [1]महत्सौख्यं गेहे कल्याणसंभ्रमम् ।
जीवान्तरे श्रियावाप्तिः पौत्रोत्सव इति स्मृतम् ॥ ६०९ ॥

मन्दे शुक्रान्तरे काले स्वपुत्रोद्वाहसंभ्रमम् ।
भुक्त्यन्ते वा वसन्तर्तौ पुत्रिकोद्वाहमादिशेत् ॥ ६१० ॥

कुम्भे शनिस्थिते काले पुत्रिकोद्वाहसंभ्रमम् ।
चापान्त्ये मकरे वापि स्वगेहे शुभशोभनम् ॥ ६११ ॥

[2]तौले शनिस्थिते काले बन्धुवर्गे मनोव्यथा ।
विपद्दाये फलं सत्यं योगप्राबल्यमादिशेत् ॥ ६१२ ॥

मुद्रराशिप्रजातस्य क्षेमदाये शुभाशुभम् ।
एकयोगे फलं किंचि[3]द्योगसङ्करमश्नुते ॥ ६१३ ॥

लग्ने [4]शस्यन्तरे वापि ह्रस्वसौख्यं क्वचित् सुखम् ।
शुक्रान्तरे विशे[5]षस्यात् पुत्रप्राबल्यमादिशेत् ॥ ६१४ ॥

सुखेशाकान्तभवने[6] स्वांशे वा तत्त्रिकोणगे ।
स्फुटयोगं गते मन्दे स्वराजक्लेशमादिशेत् ॥ ६१५ ॥

जीवे सौख्यं सुभूप्राप्ति[7] राजानुग्रहशान्तिकम् ।
लक्ष्मीकटाक्षसान्निध्यं गोचरे फलमादिशेत् ॥ ६१६ ॥

अश्विनीमखमूलेषु [8]पापिनामुदयेषु च ।
तदंशे गोचरे मन्दे देहायासो[9] महाविपत् ॥ ६१७ ॥

बुधाष्टवर्गे[10] निक्षिप्य [11]हीनबिन्दुषु राशिषु ।
स्फुटयोगं गते सौम्ये तत्त्रिकोणे निशाकरे ॥ ६१८ ॥

---

1. महा
2. तुलाशनौ यदा विन्द्यात् — 3. योगं
4. लग्नेश्वरान्तरायादि शस्य — 5. विशेषं
6. अंशे — 7 भूप्राप्तिः
8. पापाक्रान्तस्य कालगे — 9. यासं
10. वर्गे — 11. हीनबन्धुषु

अतीव क्लेशकार्याणि देहयासं विनिर्दिशेत् ।
अष्टमाधिपतौ मन्दे पञ्चमे मिथुनांशगे ॥ ६१९ ॥
[1]सौम्यपाके सौम्यभुक्तौ शरत्कालेऽपमृत्युमान् ।
वसन्ते वा मृतिं [2]चैति कृष्णपक्षे भृगोर्दिने ॥ ६२० ॥
मन्दवारेऽथवा मृत्युः सप्तपञ्चाशवत्सरे ।
[3]व्ययस्थानगते जीवे सबले शुभवीक्षिते ।
मृद्वंशे प्रजातश्च[4]देहान्ते पुण्यलोकवान् ॥ ६२१ ॥
व्ययाधिपे मदे स्वांशे[5] कर्मजीवे प्रजायते ।
महादेवप्रसादेन पुण्यलोकं प्रयास्यति ॥ ६२२ ॥
पश्चादुत्तमजन्मा स्यात् [6]पूर्वपुण्येनहेतुना ।
एकाशीतिपदं चक्रं निर्बंधकसमन्वितम् ॥ ६२३ ॥
अर्चयेद्ध्यानमन्त्रेण महारोगोपशान्तये[7] ।
[8]रन्ध्रे सुते वा जामित्रे स्थिते मन्दे प्रजायते ॥ ६२४ ॥
[9]रविवारव्रतेनाशु देहारोग्यं महत्सुखम् ।
पश्चादुद्यापनं[10]कुर्यात् कल्पोक्तविधिमार्गतः ॥ ६२५ ॥
[11]पैशाचिकभयं चैव गुल्मं चित्तभ्रमं तथा ।
असाध्य[12]रोगान्निर्मुक्त आयुरारोग्यभाक् [13]सुखी ॥ ६२६ ॥
लग्नात् पञ्चमगे सूर्ये स्वसुतेन समन्विते ।
तिल[14]पिष्टार्कदानेन [15]ह्युदरामयनाशनम् ॥ ६२७ ॥

---

1. पापे सौम्ये
2. मृतिं
3. व्ययारूढपदे जीवे वीक्षिते वा प्रजा यदि ।
4. तस्य
5. कर्मजीवः
6. शुभप्राकृतिहेतुना ।
7. शान्तये
8. सुताष्टमे वा जामित्रे मन्दे तस्य
9. भानुव्रतादिदानेन
10. चेति
11. महदाढ्यामयादीनि उदरामयपैत्यरक्
12. रोगसौख्याप्तिः
13. सुखम्
14. पिष्टप्रदानेन
15. उदर

[1]प्रतिमां तिलपिष्टेन रत्नयुक्तकरद्वयीम् ।
त्रिनेत्रां पद्महस्तां च रक्तवस्त्रैश्चवेष्टिताम् ॥ ६२८ ॥

कल्पोक्तविधिमार्गेण [2]होमान्ते दानमाचरेत् ।
[3]अत्युत्कृष्टमिदं दाननिर्णीतं रुद्रयामले ॥ ६२९ ॥

तिलपिष्टमयं[4]सूर्यं दद्यादायुष्यवर्धनम् ।
आरोग्यं च सुसौभाग्यं सन्ततिं देहि मे प्रभो ॥ ६३० ॥

एकाशीतिपदं चक्रं मध्ये सूर्यादिचक्रमात् ।
[5]कल्पोक्तैश्चैव मन्त्रैस्तु पूजान्ते दानमाचरेत् ॥ ६३१ ॥

आयुरारोग्यभाग्या[6]प्तिरपमृत्युविनाशनम् ।
ग्रहचक्रं महत्पुण्यं[7] दैवज्ञाय[8] प्रदापयेत् ॥ ६३२ ॥

नवग्रहप्रसादेन [9]आयुरारोग्यभाक् सुखी ।
राजवश्यकरं सौख्यं देहारोग्यं रिपुक्षयम् ॥ ६३३ ॥

ग्रहचक्रफलं नृणामिष्टकाम्यार्थ[10]सिद्धिदम् ।
एकाशीतिपदं चक्रं ग्रहप्रीतिकरं शुभम् ॥ ६३४ ॥

तस्मादस्य प्रदानेन सुप्रीतो[11] मां समुद्धर ।
सालङ्कृतं पूर्णकुम्भं नवधान्योपरि क्षिपेत् ॥ ६३५ ॥

तन्मध्ये पूजयेच्चक्रं [12]होमान्ते दानमाचरेत् ।
आयुरारोग्यसौख्या[13]प्तिमपमृत्युविनाशनम् ॥ ६३६ ॥

---

1. तिलापिष्टैर्विनिर्दिष्टं पद्मानि सुकरद्वयम् ।
   त्रिकोणेन पद्मास्तं च रक्तवस्त्रादिमापकम् ॥
2. पूजादानं समाचरेत्
3. अतिदृढमिदं दानं निर्णयं
4. सूर्यात्
5. महाराधनकल्पोक्तं पूजयेद्दानमाचरेत् ॥
6. भाग्याप्तिः
7. महा
8. शस्य
9. आयु
10. सिद्धये
11. सुप्रीता
12. होमदानं समा
13. आप्ति

इष्टकाम्यार्थ[1]सिद्धिं च कथयन्ति च यामले ।
मुद्रांशे प्रजातस्य पावकः सुरपूजितः ॥ ६३७ ॥

तद्दशायां शुक्रभुक्तौ शत्रुस्नेहं धनागमम् ।
सप्तमोऽथ विशेषेण [2]ह्यर्थभूषाम्बराणि च ॥ ६३८ ॥

विवाहोत्सवसौख्यानि[3] महान्नृपतिदर्शनम् ।
विशेषग्रामभूलाभं सुजनप्रीतिसंभवम् ॥ ६३९ ॥

यत्नकार्यार्थ[4]सिद्धिं च विप्लवेन क्वचिद्व्यथाम् ।

मृष्टान्नपानाम्बरभूषणाप्तिं[5]
राज्यार्थमूलाममतीव सौख्यम् ।
धैर्यं मनोत्साहमतीव[6]कीर्तिं
कुर्याद्ग्रहः पावकसंज्ञकोऽयम् ॥ ६४० ॥

[7]मित्रस्तु मित्रस्य फलं तदन्यः
शत्रुग्रहो वा कुरुतेऽतिदुःखम् ।
समग्रराज्यं बहुराजपूज्यं
[8]विद्याविनोदाञ्चितराजगोष्ठीम् ।
[9]दयालपःप्राप्तिमचिन्त्यभाग्यं
कुर्यात् फलेबोधकसंज्ञक श्च ॥ ६४१ ॥

भाग्यराशिदशाचक्रे बोधकस्य फलं वदेत् ।
मुद्रांशे प्रजातस्य तिशाब्दे फलमादिशेत् ॥ ६४२ ॥

दाराधिपदशाकाले सुखाधिपतिभुक्तिषु ।
[10]भार्या च गर्भस्रावेण देहे रोगातुरा तथा ॥ ६४३ ॥

---

1. सिद्धि· स्याद्भवतीनि न संशयः । 2. भूषणाम्बरमाप्तिमान्
3. आप्ति: 4. सिद्धिः स्यात्
5. भूषणाप्तिः 6. सौख्ये
7. मित्रो यथान्यायफलं तदन्ये ग्रहे तथान्यत् फलमातनोति ।
8. विद्याश्रियं चाचितराज्यगोष्टीम् 9. दायी
10. गर्भस्रावतुरा भार्या देहजाड्यं विनिर्दिशेत्

पश्चादारोग्यसौख्याप्ति[1] पुत्रलाभ विनिर्दिशेत् ।
कीटाश्वपञ्चाननकर्कटेषु
चरन् शनि क्षुद्भयद[2] प्रजानाम् ।
[3]वृष्टेर्भयं चातजमभिज वा
तथापि जीवन्ति जना कथंचित् ॥ ६४४ ॥

कुम्भचक्रदशाकाले शनौ वक्रातिचारगे ।
औत्पर्य[4]देशकलहो दक्षिणा दिशमेष्यति ॥ ५४५ ॥

[5]स्वात्यादित्रयगे मन्दे स्वर्भानौतत्त्रिकोणगे ।
काञ्चीपिनाकिनीमध्ये देशे [6]राजान्तरं भवेत् ॥ ६४६ ॥

चोलदेशे [7]विजानीयात् पाण्ड्यदेशेऽथवा यदि ।
मण्डलाधिपतेर्मृत्युस्तद्द्वारे मातृनाशनम् ॥ ६४७ ॥

तदभावे योगभङ्ग सचितार्थविनाशनम् ।
[8]जनाना चैव मन्त्रीणां सचितार्थविनाशनम् ॥ ६४८ ॥

मीने तुलाशगे जीवे [9]तद्दशाया सितान्तरे ।
महानृपति[10]राज्ये च पूर्वसेनाप[11]ते सुखम् ॥ ६४९ ॥

तन्मूलात् सौख्यमाप्नोति स्वप्रभुश्च[12] विशेषत ।
गजाश्वबहुमानादि[13]मिष्टसिद्धि[14] विनिर्दिशेत् ॥ ६५० ॥

गुरु तृतीयपर्याये मुद्रा[15]शे च जायते ।
[16]त्रिकोणस्थोऽश्वियावाप्ति लाभे शत्रुभयं क्वचित् ॥ ६५१ ॥

---

1 आप्ति 2 भयद
3 वृष्टिर्भय कुत्रचिद भय च 4 कलह चैव
5 स्वातित्रयगते मन्दे स्वर्भानु स्वत्रिकोणगे ।
6 राज्या 7 तथाविन्यात्
8 अमात्यातिफल चेति तद्द्वारे स्वजनावधि
9 दशायां गुरुभुक्तिषु 10 तद्द्वारे
11 पती 12 प्रभोन
13 इष्टसिद्धि 14 इष्टसिद्धि
15, प्रशस्त जातके 16 नवमादिश्रियावाप्ति

द्वादशे सौख्यसन्तोषं जन्मे सर्व[1]सुखं महत् ।
पुत्रोत्सवसुभूषाप्ति[2] ज्ञातिवर्गे सुतक्षयम् ॥ ६५२ ॥

[3]कीटस्थशनिदोषेण कलहं राज[4]हेतुना ।
पश्चात् स्वस्थानमाप्नोति राजप्रीत्या[5] धनागमम् ॥ ६५३ ॥

अमूल्यवस्तुवाहादिलाभो भवति नित्यशः ।
लाभेशांशे तत्त्रिकोणे स्फुटयोगं गते गुरौ ॥ ६५४ ॥

इदमेव फलं सत्यं कर्माधिपतिदायगे ।
द्वितीये धनवस्त्रा[6]प्ति लाभेऽन्त्ये च शुभाधिकम् ॥ ६५५ ॥

मन्दे गुरुयुते काले मण्डलाधिपतेर्विपत् ।
तत्काले जातकस्यैव [7]क्षतिमपवलमादिशेत् ॥ ६५६ ॥

तृतीये व्याकुलं किंचित्क्रूरमासे शुभाशुभम् ।
बन्धुवर्गे मनस्तापस्तत्त्रिकोण[8] इदं फलम् ॥ ६५७ ॥

सुखे सौख्यसुपुत्राप्तिं[9] पञ्चमे व्याकुलं महत् ।
राजनिष्ठुरकर्याणि पश्चात् सौख्यं विनिर्दिशेत् ॥ ६५८ ॥

जीवे चतुर्थपर्याये मुद्गरां[10]शे च जायते ।
मीनान्त्याजे[11] मनस्तापं वृषभे व्याकुलं महत् ॥ ६५९ ॥

रन्ध्राधिपदशाकाले स्वराजभयं महत् ।
जातकस्य फलं किंचिद्[12]रूपसौख्यं विनिर्दिशेत् ॥ ६६० ॥

मुद्गरांशे प्रजातस्य द्यूनाधिपदशान्त्यगे ।
क्रूरान्तरे मनस्तापं मातामहविनाशनम् ॥ ६६१ ॥

---

1 शुभावहम्
2. भूप्राप्तिः
3. वृश्चिके
4. विग्रहम्
5 प्रीतिः
6. आप्तिलाभान्त्याप्ति
7. अति
8. कोणे
9. आप्तिः
10. अंशस्य जातके
11. अन्त्यादि
12. अल्प

मातुलप्रबलं चेति कर्माधिपतिदायके ।
स्वमातृभगिनीपुत्रप्राबल्यं चोत्तरोत्तरम् ॥ ६६२ ॥

लग्नाधिप[1]दशाया तु लग्नाधिपतिदायगे ।
[2]स्वान्तरे चापमृत्युश्च शान्त्या शान्तिं प्रयास्यति ॥ ६६३ ॥

[3]सुखाधिपान्तरे मन्दे त्वेकचत्वारिंशत्तरे ।
जननी मृत्युमाप्नोति सहस्त्रिंशेऽथवा यदि ॥ ६६४ ॥



## सिंहलग्नं शिवकर्यंशकः

शिवकर्यंशके नाड्यां[4] सिंहलग्ने सुभाग्यवान् ।
शूद्रजन्मा[5]सुखी नित्यं सीमन्[6]तो भवति ध्रुवम् ॥ ६६५ ॥

[7]पितुर्जातः परोक्षस्य पूर्वभागे विचारवान् ।
उत्तराशे प्रजातस्य समीपे स्वपिता सुखी ॥ ६६६ ॥

पूर्वभागे वनप्रान्त्ये गिरिप्रान्त्येऽथवा यदि ।
माताम[8]ह्यासमीपे तु शुभामे जननं स्मृतम् ॥ ६६७ ॥

लग्ने राहुयुते जीवे नास्त्येष्टन[9]संभव. ।
वर्गोत्तमे शुभं [10]राहु स्वोंशाशे वा विशेषत ॥ ६६८ ॥

स्वक्षेत्रे गुरुसंदृष्टे लग्नेशे वा बलान्विते ।
नाडी शिवकरीसंज्ञा पूर्वभागे महत्सुखम् ॥ ६६९ ॥

लग्ने [11]वृषांशके राहौ गुरुणा च निरीक्षिते ।
तदीशे बलवान् यस्य रक्तवर्णशुभाकृतिः ॥ ६७० ॥

---

1. दशान्त्यादि
2. स्वभुक्तौ
3. मन्दे सौख्यान्तरे काले
4. नाडी
5. जन्म
6. सीमन्ते शिशुजातकम्
7. पितृजात
8. हिशमीपेषु
9. जातकम् ।
10. मातामचेति
11. स्वंशगते राहु

लग्नाधिपेन संदृष्टे दीर्घायुर्भेदभ्रातृमान् ।
लग्नेशे गुरुसंदृष्टे लग्नेवामरपूजिते ॥ ६७१ ॥

नालवेष्टन[1]दोषस्य नाशनं भवति ध्रुवम् ।
लग्नेशे स्वोच्चराशिस्थे स्वक्षेत्रे वा बलान्विते ।

गुरुदृष्टियुते वापि [2]न दोषो नालवेष्टजः ॥ ६७२ ॥
सोदरभ्रातृमान् रागी भगिनीद्वयवान् सुखी ।
पूर्वभागे प्रजातस्य राजन्यद्वेषवान् पिता ॥ ६७३ ॥
[3]पितुः समीपे जननं [4]ह्युत्तरांशे तु जायते ।
महानदीप्रान्त्यदेशे नगरे वाप्रसूतिमान् ॥ ६७४ ॥
लग्ने राहुयुते जीवे भोगी वर्गोत्तमांशके ।
सुशरीरः सुदीर्घायू राजपूज्यः प्रतापवान् ॥ ६७५ ॥

सिंहे विलग्ने गुरुराहुयोगे
कालान्तरे दुर्बलदेहभाक् स्यात् ।
तताम्बिके[5] सौख्यसुदीर्घमायु
र्भोगी सदा मातृनृपप्रियः स्यात् ॥ ६७६ ॥

वर्गोत्तमे यदा जीवे विलग्ने राहुसंयुते ।
सिंहे वा वृषभे जातो [6]ह्यल्पायुर्दाययोगवान् ॥ ६७७ ॥
नीचारि[7]पापवर्गांशे सिंहे जीवे [8]न जीवति ।
आबाल्यक्लेशवान् रोगी मातृसौख्यविहीनवान् ॥ ६७८ ॥
सिंहे [9]कीटांशगे जीवे कन्यांशे राहुसंयुते ।
राजद्वारे [10]कीर्तियुक्तो पिता बाल्ये सुकीर्तिमान् ॥ ६७९ ॥

---

1. दोषादि सहस्रारिष्टनाशनम् 2. दोषयुक्तःचिरंस्मृतम्
3. पिता 4. उत्तरांशस्य जातके
5. अम्बिका 6. अल्पायुः
7. शत्रु 8. गतायुषः
9. मुहांशगे 10. सुकीर्तिश्च
11

सर्वाङ्गरोगी विपुलः कुचेल
धारी कुचर्मी कुमुखी कुमूर्तिः ।
अधार्मिकः साहसकार्यदक्षः
[1]सेनासमेतः क्षितिभोगभाक् स्यात् ॥ ६८० ॥

लग्ने राहुयुते जीवे सिंहांशे राजपूजितः ।
कन्यांशकगते [2]राहौ लेख्यविद्याविशारदः ॥ ६८१ ॥

लिपित्रयप्रवीणश्च धर्मशीलः सुबुद्धिमान् ।
अन्तःक्रोधी सुकौटिल्यः किंचिद्धूर्तस्वभाववान् ॥ ६८२ ॥

स्वपिता राजनिकटे कार्यकर्ता विचक्षणः ।
अन्तःकपटवान् रागी स्वराजजनरञ्जकः ॥ ६८३ ॥

लग्ने कन्यांशगे [3]राहौ रविशुक्रनिरीक्षिते[4] ।
तृष्णाभिभूतः क्लेशीच कष्टकार्य[5]विचक्षणः ॥ ६८४ ॥

उत्साही विपुलः कामी स्वपित्र[6]धिकयुक्तिमान् ।
[7]जातकः सत्यवादी च मध्ये वयसि शोकवान् ॥ ६८५ ॥

बाल्ये सुखी विनीतश्च धर्मशीलः कुयुक्तिमान् ।
[8]कृशगात्रोऽर्थवांश्चैव हरिशङ्करभक्तिमान् ॥ ६८६ ॥

कुम्भांशे तौलिगे चन्द्रे कुटिलः पापचेतनः ।
असितेन युते[9] भोगी वातप्रकृतिरोगवान् ॥ ६८७ ॥

सुमुखः कुशलो मन्त्री नीतिज्ञः परदारगः ।
इङ्गितज्ञः सदा रोपी वृषभांशकगे शनौ ॥ ६८८ ॥

---

1. बहुप्रसेनो
2. राहु
3. राहु
4. क्षितौ
5. तवान् विभुः
6. पिता
7. जातकस्य पूर्ण सत्यं
8. क्षमाप्वान
9. युतो

मोहनांशकगे चन्द्रे [1]स्वसितेन समन्विते ।
[2]आयुष्मन्तौ च पितरौ कलत्रद्वयवान् पिता ॥ ६८९ ॥

बाधके स्त्रीसुभाग्याप्त[3]आचार्यं च सुसौख्यवान् ।
मोहनांशे निशानाथे शिवकर्यंशजातकः[4] ।

[5]आयुष्मन्तस्त्रिपितृव्याः केचित्पक्षे त्रुतुष्टयम् ।
पितृष्वसा पुत्रवती [6]ह्यल्पभाग्यवती शुभा ॥ ६९० ॥

कालान्तरे भ्रातृशोकं भर्तुः पूर्वं मरिष्यति ।
सिंहे सिंहांशगे जीवे षष्ट्यंशे देवभागगे ॥ ६९१ ॥

शिवकर्यंशके नाड्या[7] योगवान् कीर्तिमान् सुखी ।
शिवदांशकगे जीवे मोहनांशे निशाकरे ॥ ६९२ ॥

शिवकर्यंशके [8]तस्य पितरौ दीर्घजीविनौ ।
भेदभ्रातृयुतो मानी [9]दीर्घजीवी पितामहः ॥ ६९३ ॥

[10]भेदस्वसा सुमाङ्गल्या पितामह्या सुपोषिता ।
पुत्रिणी पतिभक्ता च ज्येष्ठभ्रातृ[11]प्रिया शुभा ॥ ६९४ ॥

मध्ये [12]रोगक्लेशवती पुत्रनाशेन कर्शिता[13] ।
बहुभाग्यवती [14]भर्तृभूषिता सुगुणा सती ॥ ६९५ ॥

मोहनांशकगे चन्द्रे [15]स्वसितेन समन्विते ।
[16]मातामहश्चिरञ्जीवी मातामही तथैव च ॥ ६९६ ॥

---

1. असितेन
2. पितृमातृचिरायुष्यं
3. आप्ति
4. जातके
5. पितृव्यत्रयमायुष्यं
6. अल्प
7. नाडी
8. जात: पितृमातृचिरायुषम्
9. पितामहचिरायुषि
10. भेदभ्रातृसुमाङ्गल्यं पितामहिसुपोषिता ।
11. प्रियं शुभम्
12. क्लेशवती रोगी
13. कर्शितः
14. भर्तृभूषिता सगुणवती
15. असितेन
16 मातामहिचिरायुष्य मातामहस्तथैव च

मोहनांशे स्वजननी भ्रातृभात्रीसमन्विता ।
भ्रातृ[1]भाग्येन सन्तुष्टा भूषिता स्वसुतप्रिया ॥ ६९७ ॥

स्वभेदभ्रातृभार्याद्विद्वेषे[2]त्यन्तकर्शिता ।
कालान्तरे गृहच्छिद्रे भ्रातृनाशेन दुःखिता ॥ ६९८ ॥

मेषांशे मकरे सौम्ये सुखे [3]भौमे परांशगे ।
सिंहलग्ने प्रजातश्च [4]मातुलत्रयवान् सुखी ॥ ६९९ ॥

पूर्वभागे सिंहलग्ने मोहनांशे[5] च जायते ।
[6]त्रिमातुलाश्चायुष्मन्तः केचित्स्युश्चतुष्टयम् ॥ ७०० ॥

मातृवंशे च [7]दारिद्र्यं दुःखिता मातृसोदरी ।
एका सुमङ्गली पूता क्लेशिता च तथापरा ॥ ७०१ ॥

[8]मतुलैको दीर्घजीवी केचित् कालान्तरे फलम् ।
शिवकर्ययशगे [9]नाड्यां पूर्वभागे च जायते ॥ ७०२ ॥

स्वमातृसोदराश्चाष्टौ [10]जीवन्ति द्वौत्रयस्तथा ।
[11]चन्द्रस्याष्टकवर्गे च चन्द्रे यावत्फलैर्युते ॥ ७०३ ॥

[12]तावत्संख्या सोदराणां जनन्याश्च भवेत्तथा ।
[13]सूर्यस्याष्टकवर्गे च सूर्ये यावत्फलैर्युते ॥ ७०४ ॥

तावत्संख्या पितृव्यानां भवतीति मनीषिणः ।
पितृव्याधिपतौ सौम्ये सिंहारूढे क्रियांशगे ॥ ७०५ ॥

---

1. भ्रातृसुसन्तोषी
2. द्वेष
3. भौम
4. प्रजातस्य
5. अत्रास्य जातके
6. मातुलत्रयमायुष्यं
7. दरिद्रं स्याद्दुःखी भर्तृसहोदरी
8. मातुलस्यैकमायुष्यं
9. नाडीपूर्वभागस्य जातके
10. द्वित्रिसंख्याश्चिरायुषम्
11. चन्द्रांशो ष्टक
12. त्वत्संख्यास्वजननी सहोदरमिति स्मृतम्
13. सूर्यांशगे पितृफलमस्ताराष्टकवर्गके
योजयेत्सपितृव्यादिफलानिपरिचिन्तयेत् ।

लग्नेशे पापसंयुक्ते पितृव्यौ द्वौ द्विभार्यकौ[1] ।
शिवदांशे पिता ज्ञानी ज्येष्ठभ्रातृविनाशवान् ॥ ७०६ ॥

[2]त्रिभिःकनिष्ठभ्रातृभिर्युतश्चासौ सुजीविभिः ।
पूर्वभागे पितृव्यौ द्वौ स्वपिता च द्विभार्यकः ॥ ७०७ ॥

वन्ध्यापतिद्वयं चैति कालान्तरफलं स्मृतम् ।
दारान्तरे सुतप्राप्ति[3]र्द्वे भार्ये चिरजीविते ॥ ७०८ ॥

सुतेशे पापसंयुक्ते तृतीये शनि[4]संस्थिते ।
स्वपितृ[5]व्येषु यः कश्चिन्मृतसन्तानयोगवान् ॥ ७०९ ॥

सूर्यांशराशिगे मन्दे चन्द्रांशे केतुसंस्थिते ।
[6]पापिनौ च पितृव्यौ द्वौ मातुलौ द्वौ कथं भवेत् ॥ ७१० ॥

स्वपितृव्यफलं सत्यं [7]फलं मातुलयोस्तथा ।
[8]जन्मपाके निशानाथे सुखे [9]भौमे प्रजायते ॥ ७११ ॥

मातृवंशेऽप्यरिष्टं स्यान्मातु[10]लाश्च प्रपीडिताः ।
मातामही सु[11]सन्तापं [12]मातुलान्य. प्रपीडिताः ॥ ७१२ ॥

तदभावे मातुलस्याप्यरिष्टमिति चादिशेत् ।
तद्दोषपरिहारार्थं शान्तिं कुर्याद्यथाविधि ॥ ७१३ ॥

[13]बकराह्वोर्जपं कुर्यादन्ते होमं यथाविधि ।
नागपाशप्रदानेन शान्तिं कुर्यात् प्रयत्नतः ॥ ७१४ ॥

मातृवंशे ततः पश्चाच्छुभं भवति नित्यशः ।
मोहनांशकगे चन्द्रे पितृ[14]वंशो न दोषभाक् ॥ ७१५ ॥

---

1. भार्यवान्
2. कनिष्ठत्रयमायुष्यं सहोदरसमन्वितः ।
3. कलत्रद्वयमायुषी
4. जातके
5. पितृव्यस्य
6. पितृव्यौ द्वौ महापापीमातुल
7. मातुलस्य तथा'भवेत्
8. पाके जन्म
9. भौमः
10. मातुलादिप्रपीडितः
11. स्व
12. स्वदारोपद्रवे व्यथा
13. अङ्गारकजपं राहुशान्तिं कुर्याद्यथाविधि
14. वंशो

मातृवंशे कश्चिच्चेति जन्मदाये पितु[1]र्व्यथा ।
क्रूरमासे जन्मदाये लग्नाधिपतिभुक्तिषु ॥ ७१६ ॥
[2]प्रपीडया जातकस्य जननी व्याकुलं महत् ।
कुम्भे तुलांशगे सूर्ये बालारिष्टं न विद्यते ॥ ७१७ ॥
तदीशो बलवान् यस्य दीर्घमायुश्च विन्दति ।
अरोगो दार्ढ्यवान् बाल्ये सुकुमारशरीरवान् ॥ ७१८ ॥
तुलांशकफलं सत्यं दिवाकरफलं स्मृतम् ।
कुम्भ[3]त्रिकोणगे सूर्ये तुलांशे कुजवीक्षिते ॥ ७१९ ॥
[4]यस्यां नाड्यां प्रजातस्य दीर्घमायुर्भविष्यति ।
स्वक्षेत्रे स्वोच्चगे चन्द्रे [5]शुचग्रहयुतेऽथ वा ॥ ७२० ॥
सूर्यांशकफलं सत्यं [6]पितरौ दीर्घजीविनौ ।
सूर्यलग्नाधिपे स्वोच्चे कर्मेशे भृगुवीक्षिते ॥ ७२१ ॥
शिवदांशे प्रजातस्य स्वपिता शिवभक्तिमान् ।
शिवकैङ्कर्यधर्माढ्या भ्रातृमात्रीसमन्वितः[7] ॥ ७२२ ॥
शिवतत्त्वाभिज्ञो देवब्राह्मणपोषकः ।
सप्ताद्ये पि[8]तृरिष्टं षोडशाब्दे मृते शनौ ।
द्वादशाब्देऽपमृत्युश्च शान्त्या शान्ति प्रयास्यति ॥ ७२३ ॥
एकोनविंशके वर्षे द्वादशे षोडशेऽथवा ।
शिवदांशे पूर्वभागे पितृ[9]रिष्टं विनिर्दिशेत् ॥ ७२४ ॥
आद्विपञ्च सुखी नित्यं जननी चिरजीविनी ।
द्विपञ्चांशेऽपमृ[10]त्युं च तदर्धे वा प्रपीडिता[11]॥ ७२५ ॥

---

1. पिता
2. जातकस्य
3. कुम्भे
4. तस्य नाडी
5. उच्चग्रह
6. पितृमातृचिरायुषम्
7. अन्विता
8. पिता
9. पिता
10. मृत्युश्च
11. पीडिता:

अपमृत्युभयप्राप्तिमातृभावफलं स्मृतम् ।
लाभेशांशे तत्रिकोणे स्फुटयोगं गते शनौ ॥ ७२६ ॥

लाभेशद्दष्टरशौ तु [1]माता रोगेण पीडिता ।
मातृवंशजनारिष्टं तत्काले नात्र संशयः ॥ ७२७ ॥

जननी व्याकुलं चैति योजयेत् कालवित्तमः ।
शिवदांशकगे जीवे मोहनांशे निशाकरे ॥ ७२८ ॥

[2]भेदभ्राता चिरायुष्मान् स्त्रीप्रजा [3]बहुलाः स्मृताः ,
अल्पपुत्रफलप्राप्तिः कलत्रस्यैकवान् भवेत् ॥ ७२९ ॥

ग्रन्थान्तरे नारदीये शिवदांशे[4] च जायते ।
भेद[5]भ्राता चिरायुष्मान् केचित्पक्षे द्विभार्यकः ॥ ७३० ॥

दारद्वये सुतप्राप्तिर्नरवाहनभाक् सुखी ।
कालान्तरे [6]द्विभार्यश्च पितृवात्सल्य[7]वान् सदा ॥ ७३१ ॥

षष्ठाधिपदशाकाले रन्ध्राधिपतिभुक्तिषु ।
लाभे[8]शस्यान्तरे वापि ज्येष्ठभ्रातृविनाशनम् ॥ ७३२ ॥

सुताधिपदशाकाले सुतेशांशत्रिकोणगे ।
स्फुटयोगं गते मन्दे ज्येष्ठ[9]भ्राता तु रोगवान् ॥ ७३३ ॥

अन्तरान्तर्दशाकाले [10]मन्दे सौम्ये धरासुते ।
[11]प्रपीडितो भेदभ्राता पितृव्यो वा भविष्यति ॥ ७३४ ॥

शुक्रान्तरे सर्वदाये स्वपितुर्व्याकुलं महत् ।
मन्दान्तरान्तरे वापि राजद्वारे मनोव्यथाम्[12] ॥ ७३५ ॥

---

1. मातृदेहः प्रपीडितः
2. भेदभ्रातृचिरायुष्यं
3. बहुला भवान्
4. अंशस्य जातके
5. भ्रातृचिरायुष्यं
6. भार्या च
7. आदिशेत्
8. लाभे शान्तरगे
9. भ्रातृप्रपीडकत्
10. मन्द
11. भेदभ्रातृप्रपीडादि
12. व्यथा

तद्भावाष्टमे मन्दे दशा[1]यामन्तरेषु वा ।
तद्भावमपी[2]डां च योजयेन् कालवित्तमः ॥ ७३६ ॥

लग्नात् तृतीयगे मन्दे स्वोच्चे पूर्णबलान्विते ।
निशाकरेण संयुक्ते सोदरत्रयमादिशेत् ॥ ७३७ ॥

[3]आयुष्मत्यौ च भगिन्यावेका तु चिरजीविनी ।
कालान्तरे [4]भूमिनाशं सन्तानोत्पत्तिनाशनम् ॥ ७३८ ॥

तद्दोषपरिहारार्थं शान्तिं कुर्यात् प्रयत्नतः ।
शिशुमारप्रदानेन पुत्रायुर्वृद्धिमादिशेत् ॥ ७३९ ॥

लग्नात् तृतीयगे मन्दे [5]यस्यां नाड्यां प्रजायते ।
उद्वाहानन्तरं चैति दारवंशे[6]ऽर्थनाशनम् ॥ ७४० ॥

शिवदांशे पूर्वभागे सम्पद्वाये शुभान्तरे ।
मनुवर्षे विवाहः[7] स्याद्विघ्नं स्यात् पापकर्मणा[8] ॥ ७४१ ॥

उत्तरायणगे सूर्ये साधनान्ते विवाहवान् ।
वसन्तकाले मायाब्दे केचित्पक्षे फलं स्मृतम् ॥ ७४२ ॥

सिंहे वर्गोत्तमे जीवे सिंह[9]लग्ने च जायते ।
लग्नात्तृतीयगे मन्दे [10]त्वेकपुत्रस्तु जीवति ॥ ७४३ ॥

ग्रन्थान्तरे गर्ग[11]मते पुत्रद्वययुतः सुखी ।
पुत्रिकैका सु[12]माङ्गल्या दुःखि[13]ता पितृसोदरी ॥ ७४४ ॥

ऐन्द्रपांशे पूर्वभागे लग्नारूढे निशाकरे ।
चन्द्रांशके तदी[14]शे च भाग्यांशे बहुभाग्यवान् ॥ ७४५ ॥

---

1. चान्तदेशेऽपि च
2. पीडादि
3. भगिनीद्वयमायुष्यमेकमेव चिरायुषम् ।
4. ग्रास
5. यस्य नाडी
6. अरिष्टकृत्
7. विवाहं
8. कर्मणः
9. लग्नस्य जातके
10. एकपुत्रचिरायुषम्
11. होरे
12. शुभ
13. दुःखितस्त्वद
14. तदीशस्य

राजयोगं [1]च लभते भाग्येशांशस्य दायगे ।
अतीव श्रियमाप्नोति योगकारकभुक्तिषु ॥ ७४६ ॥

क्लेशकार्यं [2]च लभते स्ववयोगं गृहान्तरे ।
सोदरस्य [3]कलापेन संचितार्थविनाशनम् ॥ ७४७ ॥

पञ्चमाब्दे दशा[4]संधावस्वपीडां विनिर्दिशेत् ।
मीनचक्रदशाकाले भेद[5]भ्राता श्रियान्वितः ॥ ७४८ ॥

सम्पद्दाये सुवाहातिर्भेदभ्रातृफलं स्मृतम् ।
जन्मदाये पितासौख्यं [6]व्यये वक्रगुरौ तथा ॥ ७४९ ॥

अतीव श्रियमाप्नोति जन्माब्दे शत्रुनाशनम् ।
[7]पित्रा सेवितभूपस्य विवाहोत्सवमादिशेत् ॥ ७५० ॥

कन्यागुरुफलं सत्यं सिंहान्त्ये सौख्यमादिशेत् ।
नीचांशके विलग्नेशे [8]सिंहलग्ने च जायते ॥ ७५१ ॥

स्फुटयोगं गते मन्दे लोके दुर्भिक्ष[9]जं भयम् ।
सम्प[10]तारे तत्त्रिकोणे विप[11]तारत्रिकोणगे ॥ ७५२ ॥

राजद्वारकलापेन [12]विरोधादायमादिशेत् ।
त्रयोविंशात् परं सौख्यं बुधभुक्तौ सुखावहम् ॥ ७५३ ॥

स्वप्रावल्यं [13]च लभते भ्रातृद्वेषं क्वचित् क्वचित् ।
विपद्दाये दोषहानिं[14] धनाधिपतिभुक्तिषु ॥ ७५४ ॥

---

1. प्रकुर्वीत
2. प्रकुर्वीत अत्र
3. कलापादि
4. सन्धिर
5. भ्रातृश्रियावहम्
6. द्वादशाङ्गारकगे गुरौ
7. स्वापितासेवनृपति
8. सिंहकालस्य जातके
9. डाबरम्
10. सम्पद्दाये
11. विपद्दाये
12. निरोधा
13. प्रकुर्वीत
14. हानिः

पूर्वो[1]क्तभुक्तिकालेऽपि मण्डलाधिपतेर्विपत् ।
[2]पूजाविघ्नहनाशं च स्वण्डवृष्टे[3]र्भयं क्वचित् ॥ ७५५ ॥

क्षेमदाये मनस्तापं पूर्वार्धे व्याकुलं महत् ।
अपरार्धे सुसौख्याप्ति[4] प्रबलोद्योगवान् सुखी ॥ ७५६ ॥

प्रत्यग्दाये शुभं किंचित् साधनेशदशा शुभा[5]
पञ्चषष्टिसमे मृत्युर्जीविते [6]त्वेकसप्तती ॥ ७५७ ॥

सम्पद्दाये सेतुयात्रां[7] स्वपित्रा सह यास्यति ।
[8]सहोदरं चायुष्मन्तं विपद्दाये सुभाग्यवान् ॥ ७५८ ॥

त्रिंशोपरि महद्भाग्यं [9]राजयोगशुभावहम् ।
पुण्यतीर्थफलप्राप्ति[10] राजद्वारे सुकीर्तिमान् ॥ ७५९ ॥

चत्वारिंशेऽपमृ[11]त्युं च द्विचत्वारिंशगेऽथवा ।
अतीव क्लेशकार्याणि प्रबलोद्योगवान् सुखी ॥ ७६० ॥

[12]व्ययस्थानगते सौम्ये शिवदांशे सुलोकवान् ।
स्वपिता च तथा स्त्र्यादिवदायुष्यभाग्यवान् ॥ ७६१ ॥

—:*:—

मकरलग्ने कालिकांशः ।

कालिकांशे पूर्वभागे मकरे [13]च प्रजायते ।
शूद्र[14]जन्मा सुखी नित्यं [15]द्वितीयगर्भसंभवः ॥ ७६२ ॥

---

1. पूर्वोक्तमान्तरे वापि
2. पूजादीदापेनाशादि
3. वृष्टिः
4. आप्तिः
5. एक
6. यामा
7. शोदरोत्पत्तिमायुष्यं
8. योगयोग
9. प्राप्तिः
10. मृत्युश
11. व्ययाम्बरपदे
12. लग्नजातके
13. धन्म
14. द्वितीये गर्भजातकम्

अथवा च तृतीयः[1]स्याज्ज्येष्ठभ्रातृविनाशवान् ।
पितुः समीपे जननं नालवेष्टनमादिशेत् ॥ ७६३ ॥

नक्रेक्षितीशपष्ठ्यंशे कालिकांशे प्रजायते ।
पूर्वभागे कृशश्चैव बाल्ये देहप्रपीडितः ॥ ७६४ ॥

वनान्तरपुरे ग्रामे रम्ये नूतनमन्दिरे ।
भाग्यकाले प्रसू[2]तश्च रक्तवर्णकृशाकृतिः ॥ ७६५ ॥

उत्तरांशे नदीप्रान्ते कालिकापुरमन्दिरे ।
परोक्षजननं चैव कालिकांशे प्रसूतिमान् ॥ ७६६ ॥

स्वपिता मान्त्रिकः कामी नानादेशेषु संचरन् ।
अरोगदृढगात्रश्च क्लेशजीवनवान् पिता ॥ ७६७ ॥

मन्थान्तरे कालिकांशे [3]ह्युत्तरांशे च जायते ।
[4]आयुष्मन्तौ च पितरौ मातृभ्रातॄर्बहुत्ववान् ॥ ७६८ ॥

पूर्वभागे पिता ज्ञानी वैदिकाचारवान् सुधीः ।
राजसेवापरो नित्यं देवब्राह्मणभक्तिमान् ॥ ७६९ ॥

लग्ने गुरुयुते [5]दृष्टे लग्नेशे स्वोच्चराशिगे ।
[6]यस्यां नाड्यां प्रजातस्य नाल[7]दोषो न विद्यते ॥ ७७० ॥

नीचे नीचांशगे चन्द्रे षष्ठेशांशकगे शनौ ।
जन्माब्दे मातुलक्लेशं द्रव्यनाशं विनिर्दिशेत् ॥ ७७१ ॥

कालिकांशे पूर्वभागे नीचांशस्थे निशाकरे ।
नालवेष्टनदोषेण मातृवंशोऽप्यरिष्टकृत् ॥ ७७२ ॥

पितृवंशे महत्सौख्यं पितृव्यादिशुभावहम् ।
कालिकांशे फलं चेति पितृसौख्यं विनिर्दिशेत् ॥ ७७३ ॥

---

1. तृतीया
2. प्रसूतिश्च
3. वसरां घासमस्तके
4. पितृमातृचिरायुष्यं
5. दृष्टि
6. यस्य नाडी
7. दोषे

त्रिग्रहोच्चे कालिकांशे नीचक्षेत्रे निशाकरे ।
गुरुदृष्टियुते भोगी विपद्दाये शुभाग्यवान् ॥ ७७४ ॥

अष्टमाधिपतौ रन्ध्रे शुभांशे शुभवीक्षिते ।
कालिकांशे पूर्वभागे बालारिष्टभयं क्वचित् ॥ ७७५ ॥

जन्मदाये द्विलिवारं सम्पद्दाये स्वभुक्तिषु ।
बालारिष्टभयं [1]चैति शान्त्या शान्तिं प्रयास्यति ॥ ७७६ ॥

बालारिष्टप्रशान्त्यर्थे[2] राजतं चन्द्रमर्चयेत् ।
कांस्यपात्रोपरि स्थाप्य दानं कुर्याद्विचक्षणः ॥ ७७७ ॥

कालिकांशे पूर्वभागे मकरे रवि[3]संस्थिते ।
[4]निर्मितां च सुवर्णेन रक्तवस्त्रेणवेष्टि[5]ताम् ॥ ७७८ ॥

[6]अर्कस्य प्रतिमां दद्यादायुरारोग्यभाक् सुखी ।
[7]दिवाकरस्य कल्पोक्तस्वगृह्योक्तविधानतः ॥ ७७९ ॥

अपहोमादिकं चैव शान्तिं कुर्याद्विचक्षणः ।
कालिकांशे पूर्वभागे मकरे रवि[8]संस्थिते ॥ ७८० ॥

रविशान्तिवशारोग्यं बालारिष्टं न विद्यते ।
[9]सवस्त्रां प्रतिमां चान्द्रीं चन्द्रकल्पोक्तमार्गतः ।
दानेन सौख्यमाप्नोति देहपुष्टिकरं शुभम् ॥ ७८१ ॥

पूर्वभागे प्रजातस्य शान्तिं यत्नेन कारयेत् ।
मातृभ्रात्रादिसुखसौख्यतिर्यगारिष्टं न विद्यते ॥ ७८२ ॥

दृग्राशे प्रजात[10]श्चन्द्रात्स्यादिसुसौख्यवान् ।
क्लेशजीवनवाप्नोति मातृभ्रात्रीसमन्वितः ॥ ७८३ ॥

---

1. चैति
2. प्रशमने राजतं
3. जातके
4. सुवर्णेन विनिर्दिष्टं
5. वेष्टितम्
6. प्रतिमारविदानेन आ
7. रन्ध्राधिपति
8. रानी
9. रजत प्रतिमां चन्द्र चन्द्रारिष्टोपमार्गतः ।
10. जातस्य भाग

रन्ध्रेशाक्रान्तराशीश उच्च[1]क्षेत्रे यशान्विते ।
[2]रन्ध्रस्थानगते जीवे शुभांशे दीर्घ[3]जीवित ॥ ७८४ ॥

पापांशे पापदृष्टे वा [4]ह्यल्पायुर्दायमादिशेत् ।
नीचांशके तथा विन्द्याद्योजयेत् कालवित्तमः ॥ ७८५ ॥

[5]मृतावस्थाया कीटांशे चन्द्रे पापनिरीक्षिते ।
शुभदृष्टिविही[6]ने च बालारिष्टं विनिर्दिशेत् ॥ ७८६ ॥

गुरुदृष्टियुते चन्द्रे [7]शुभखेचरसंयुते ।
जीवितावस्थगे [8]चन्द्रे बालारिष्ट न विद्यते ॥ ७८७ ॥

[9]लग्नभावगते जीवे [10]लग्नेशे गुरुवीक्षिते ।
कालिकांशे पूर्वभागे सूर्ये हालाहलांशके ॥ ७८८ ॥

रक्ताङ्गः समगात्रश्च विशालाक्ष सुनासिक ।
बाल्ये [11]चाथ कृशश्चैव पार्श्वव्याधिप्रपीडित ॥ ७८९ ॥

पञ्चमाब्दात् परं सौख्य तृतीयाब्दात् पर सुखम् ।
देहपुष्टिसुसौख्यादिस्तृतीयाब्दे महाविरत् ॥ ७९० ॥

स्वनवांशे विलग्नेशे [12]स्वोच्चे भूमिसुतेक्षिते ।
वसुवर्षात् पर सौख्यमतिबाल्ये सुखासुखम् ॥ ७९१ ॥

मिताशी भोगशाली च दाता कीर्तियुतो भवेत् ।
विद्याविनयशीलश्च लेख्यविद्याविशारद ॥ ७९२ ॥

पद्याक्षरप्रियो नित्यं मानी च जयशीलवान् ।
[13]काव्यनिर्माणकुशलो गौरीशप्रियधार्मिक ॥ ७९३ ॥

---

1. क्षेत्र
2 रन्ध्रारूढपदे
3 आयुषम्
4. अल्पायु
5 वृश्चिकांशे मृतावस्थे
6 विहीनश्च
7 चन्द्रदृष्टे शुभप्रदे
8 योगे
9. लग्नारूढपद
10 लग्नांशे
11. यथा
12 स्वांश
13. कवननम्रपरधीर

परोपकारवान्नित्यं स्वपि[1]त्रधिकबुद्धिमान् ।
मातुलद्वयवान् रागी पितृव्यत्रयभक्तिमान् ॥ ७९४ ॥

पितृष्व[2]सा सुमाङ्गल्या बहुपुत्रवती शुभा ।
कालिकांशे पूर्वभागे जामित्रेऽमरपूजिते ॥ ७९५ ॥

[3]त्रिपितृव्याश्चायुष्मन्तस्तेषामेको द्विभार्यकः ।
[4]एको वन्ध्यापतिश्चेति दारान्तरसुपुत्रवान् ॥ ७९६ ॥

स्वपितृ[5]व्येषु यः कश्चिद्राजद्वारे सुपूजितः ।
अन्तःकपटवान् रागी लोभप्रकृतिमान् गुणी ॥ ७९७ ॥

परोपकारवान्नित्यं देवब्राह्मणपोषकः ।
दारद्वये सुपुत्राप्ति[6] वार्धके श्रीसुभाग्यवान् ॥ ७९८ ॥

स्वपिता च तथा विन्ध्याद्भ्रातृत्रयसुपूजितः ।
कालान्तरे भ्रातृवैरं विभागे मनसि व्यथा ॥ ७९९ ॥

जन्मदाये पितृव्यस्तु[7] सन्तानोत्पत्तिसौख्यवान् ।
किंचिद्व्याकुलकार्याणि पश्चात् सौख्यं शुभावहम् ॥ ८०० ॥

कालिकांशे जन्मदाये पूर्वभा[8]गे च जायते ।
पितृव्योद्वाहसौख्याप्तिः सन्तानोत्पत्तिमान् सुखी ॥ ८०१ ॥

स्वजन्मदेशे नृपवित्तरविच्छिद्रकलापवान् ।
तृतीयाब्दे महत् सौख्यं शत्रुनाशात् परं सुखम् ॥ ८०२ ॥

पितृव्यस्य सुवाहासी राजप्रीति[9]करः सुखी ।
मकरांशे तुलभन्दे [10]यस्यां नाड्यां प्रजायते ॥ ८०३ ॥

---

1. पिता
2. सैकमाङ्गल्यं
3. पितृव्यत्रयमायुर्य कलमद्वययोगवान् ।
4. एक
5. व्यस्य
6. आप्तिः
7. व्यस
8. भागस्य शातके
9. करं सुखम्
10. यस्य नाडी

जन्मदाये [1]त्वनावृष्ट्या लोके धान्यक्षयं वदेत् ।
पौष्णश्रवणहस्तार्द्राभरणीवायुभेष्वपि ॥ ८०४ ॥

शनै[2]श्चरश्चरं नृणां दुर्भिक्षभयदः स्मृतः ।
[4]कर्मे मन्दे मदे जीवे मक[5]रेच प्रजायते ॥ ८०५ ॥

रूपवान् कुशलो दक्षो लेख्य[6]विद्याविचक्षणः ।
नृत्यगीतकलाभिज्ञः सदा हास्यरसप्रियः ॥ ८०६ ॥

दुरालोचनवान्नित्यं स्वराजप्रियकार्यवान् ।
गणितज्ञो नीचसेवी श्रमज्ञो वृद्धिकारवान् ॥ ८०७ ॥

देशान्तरे सुभाग्यासि[7]रुपायात् कार्यसाधकः ।
कालिकांशे पूर्वभागे दशमे शनि[8]संस्थिते ॥ ८०८ ॥

स्थानान्तरपुरी[9]वासी कुत्सितप्रभुसेवकः ।
मरकलत्रद्वयो मानी पुत्रीपुत्रसमृद्धिमान् ॥ ८०९ ॥

जीवे धनुषि कन्यायां द्वितीये सप्तमेऽपि च ।
असितेन युते दृष्टे कलत्रद्वयनाशनम् ॥ ८१० ॥

अर्कोद्वा[10]दं च लभते सर्वनाडीफलं वदेत् ।
कालिकांशे पूर्वभागे विक्रमे खेचरत्रये ॥ ८११ ॥

सोदरा.पद्य चत्वा[11]रोभ्रातृद्वययुतः सुखी ।
भगिन्येका सुभात्रस्या[12] मध्ये भ्रातृविनाशवान् ॥ ८१२ ॥

---

1. अनावृष्टि 2. चरेश्वरं
3. दुर्भिक्षे भयदा. स्मृताः 4. कर्म
5. पुत्रीराम्ब्रजातकें 6. पाणि
7. अपि: 8. जनके
9. पत्र 10. वद्वदरवधेरी
11. षत्वारि चोदरद्वय 12. मातस्यं

जननी दीर्घमा[1]युश्च आतृनाशेन कर्शिता[2] ।
मन्यान्तरे कालिकांशे जननी रोगपीडिता ॥ ८१३ ॥

पूर्वभागे [3]सुतक्लिष्टा संपद्भावे ज्वरार्दिता ।
पितामह्या[4] विनाशश्च [5]मातुलोऽपि मरिष्यति ॥ ८१४ ॥

मातुलारिष्टशोकेन जननी व्याकुलं महत् ।
द्विभार्य[6]को मातुलश्च व्ययेशांशकगे शनौ ॥ ८१५ ॥

कालान्तरे सुतप्राप्तिर्मातुलस्य फलं स्मृतम् ।
उत्तरांशे प्रजातस्य मातृवंश:[7] क्षयं व्रजेत् ॥ ८१६ ॥

पूर्वभागे सौम्यकालेरवौ हालाहलांशगे ।
पितृव्यवंशवृद्धिश्च द्वाविंशाब्दा[8]त परं सुखी ॥ ८१७ ॥

स्वजन्मदेशे नृपतिर्निर्हुकारुः सुजीवति ।
पितृव्यस्नेहमूलेन बहुस्त्रीपुत्रभाग्यवान् ॥ ८१८ ॥

सप्तविंशात् परं भाग्यं स्वप्राबल्यं महत् सुखम् ।
विद्यावान् कीर्तिमांश्चैव सदा शिवपुराणवित् ॥ ८१९ ॥

कालान्तरे चित्तशुद्धिः स्वोच्चे जीवे प्रसिद्धिमान् ।
विवाह:[9]स्यात् पञ्चदशे षोडशाब्दे पि[10]तुर्विपत् ॥ ८२० ॥

चन्द्रलग्नाष्टमाधीशदशायां पापभुक्तिषु ।
सुखेशांशगे मन्दे गोचरे पितृपी[11]डनम् ॥ ८२१ ॥

स्वोच्चे जीवे प्रसिद्धश्च देशयात्राफलं स्मृतम् ।
तदभावे जन्मदेशे राजन्य[12]क्रोधमादिशेत ॥ ८२२ ॥

---

1. आयुष्यं
2. कर्शितः
3. सुताक्लेशी
4. मद्दि
5. मातामह त धवच
6. भार्यवान्
7. मातृवंशं
8. अब्दादिभोगवान्
9. विवाहं
10. पिता
11. पीडवान्
12. क्रूर

पश्चादारोग्यमाप्नोति दशासन्धौ मनोव्यथाम्[1] ।
क्षेमदाये पि[2]तरिष्टं तुलान्त्ये वृश्चिके शनौ ॥ ८२३ ॥

तत्त्रिकोणे देहपीडां[3] पितृव्यारिष्टमादिशेत् ।
संपद्दाये कालिकांशे पितृ[4]व्यैको विनाशवान् ॥ ८२४ ॥

पितृव्यपुत्रसौख्याप्तिः स्वराजोद्वाहसंभ्रमः[5] ।
मण्डलाधिपतेर्मृत्युस्तुलांशे वृश्चिके शनौ ॥ ८२५ ॥

मसुस्थानाष्टमाधीशस्फुटयोगांशगे शनौ ।
स्वजन्मदेशे नृपते[6] राज्ये [7]विद्रवमादिशेत् ॥ ८२६ ॥

तत्त्रिकोणे[8]फलं वाच्यं योजयेत् कालवित्तमः ।
दशासन्धौ मनस्तापं [9]ज्ञातिवर्गे विचारकृत् ॥ ८२७ ॥

तदभावे मातुलस्य सोदरभ्रातृनाशनम् ।
अपमृत्युभयप्राप्तिः शान्त्या शान्तिं प्रयास्यति ॥ ८२८॥

कर्मे मन्दे क्षेमदाये सेतुस्नानफलं वदेत् ।
विपद्दाये सुखं नित्यं द्विवारं राज[10]विभ्रमम् ॥ ८२९ ॥

क्षेमाधिपदशाकाले लाभेशांशकगे शनौ ।
तयस्त्रिंशाब्दतः पश्चान्मातृनाशो[11] भविष्यति ॥ ८३० ॥

तदर्धर्षे च वा पीडा जननीव्याकुलं महत् ।
जातकस्य [12]ज्वरस्त्रासो देहासौख्यात् परं सुखम् ॥ ८३१ ॥

बाल्ये मान्द्यज्वरादीनि [13]वसूरीज्वरपीडितः ।
जीविते मध्यमायुश्च[14] विशेषात् शुभाग्रवान् ॥ ८३२ ॥

---

1. व्यथा
2. पिता
3. पीडा
4. पितृव्येदरिनाशनम्
5. संभ्रमम्
6. नृपतिः
7. विपर्यय
8. कोणगे
9. ज्ञाति
10. विद्रुमम्
11. नाशो
12. ज्वरं पापं
13. मसूरिज्वरगण्डका
14. श्चायुर्वै
13

भाग्याधिपदशासंधिकाले सन्तानवान् सुखी ।
लग्नाधिपे कर्मगते कर्माधिपतिदायगे ॥ ८३३ ॥

[1]महता राजयोगेन बहुग्रामाधिकारवान् ।
सर्वदाये राहुभुक्तौ रविसौम्यान्तरेऽपि च ॥ ८३४ ॥

चन्द्रभुक्तावरिष्टं स्याद्राहुभुक्तौ विशेषतः ।
सौम्यदाये राहुभुक्तौ शुभाशुभफलं स्मृतम् ॥ ८३५ ॥

पञ्चविंशात् परं भाग्यं त्रिंशोपरि सुभाग्यवान् ।
द्वात्रिंशात् परतः कार्यं योगप्राबल्य[2]भाग्यवान् ॥ ८३६ ॥

प्रत्यग्दायेऽपमृत्युश्च स्वभुक्तौ शुभशोभनम् ।
देशान्तरे व्याकुलं स्यात् पश्चात् स्वास्थ्यं विनिर्दिशेत् ॥ ८३७ ॥

प्रत्यग्दाये राहुभुक्तौ जीवितेशनिनाशनम् ।
साधनेशदशामृत्यू राहुभुक्तौ मरिष्यति ॥ ८३८ ॥

पञ्चपञ्चांशगे वर्षे कालिकां[3]शे च जायते ।
कालमृत्युभयप्राप्ति[4]स्त्रिषु मासेषु वृषादिषु ॥ ८३९ ॥

अथवा कार्त्तिके मासे कृष्णे [5]चादित्यवासरे ।
सौम्यवारे मृतिश्चेति पुण्यलोकं प्रयास्यति ॥ ८४० ॥

उत्तरांशे प्रजातस्य मित्रदारेशदायगे ।
कालमृत्युभयप्राप्तिः क्लेशजीवनवान् सदा ॥ ८४१ ॥

उत्तरांशे प्रजातश्च[6] पापेन नरकं व्रजेत् ।
पूर्वभागे सुखेकातिः पिता [7]तूत्तमजन्मवान् ॥ ८४२ ॥

—:*:—

1. राजयोगं च महती
2. योगवा
3. धांतस्य जातके
4. वृषभादित्रिमासगे
5. आदित्य
6. प्रजातस्य
7. उत्तम

## मिथुनलग्ने शूद्रांशः ।

शूद्रांशे पूर्वभागे [1]मिथुने च प्रजायते ।
शूद्रजन्मा[2]सुखी नित्यं [3]पुत्रः सीमन्तजः स्मृत. ॥ ८४३ ॥

पश्चाद्भ्रातृविहीनश्च बाल्ये क्लेशेन कर्शित. ।
स्वमाता विधवा भूत्वा बहुकालं च जीवति ॥ ८४४ ॥

तुलांशगे तुलाचन्द्रे शन्यङ्गारकसंयुते ।
युग्मलग्ने प्रजातस्य बाल्ये पितृविनाशनम् ॥ ८४५ ॥

अथवा[4]दुःस्थगे सूर्ये शन्यङ्गारकसंयुते ।
विषचोराग्निशस्त्रेण पितु[5]र्दुर्मरणं भवेत् ॥ ८४६ ॥

उग्रांशे प्रजातस्य विषभक्षणवान् पिता ।
पश्चादारोग्यमाप्नोति राजन्यद्वेषशोकवान् ॥ ८४७ ॥

शूद्रांशे पूर्वभागे [6]पञ्चमे पापसंयुते ।
शुभदृष्टिविही[7]ने च शस्त्रेण मरणं पितुः ॥ ८४८ ॥

[8]आयुष्मती च जननी भ्रातृभ्रात्रीसमन्विता ।
उग्रांशे स्वजननी [9]स्वेकभ्रातृसमन्विता ॥ ८४९ ॥

मातृष्वसैका विधवा मातु[10]लैकोऽपि पापवान् ।
पूर्वभागे प्रजातस्तु[11] बहुमातुलयोगवान् ॥ ८५० ॥

मातृष्वसा[12] विधवेन देशत्यागं [13]करोति च ।
शूद्रांशे पूर्वभागे पञ्चमे रवि[14]संस्थिते ॥ ८५१ ॥

---

1. मिथुनलग्नस्य जातके
2. जन्म
3. सीमन्तजनने स्मृतम्
4. अरिष्ट
5. पिता
6. पञ्चमरिष्फजन्मे
7. विहीनश्च
8. जननी दीर्घमायुष्ये
9. एक
10. मतुलोके
11. प्रजातस्य
12. मातृष्व सैककलह
13. स्थितिर्दिष्टेः
14. जातके

[1]मातृष्वसा च दुःखार्ता विलुवेन विनिर्गता ।
देशत्यागं मानभङ्गं दासी[2]कृत्यं ततः सुखम् ॥ ८५२ ॥

[3]सगमाद्राजपुत्रस्य पश्चाद्भाग्यवती सुखी ।
मुद्गरांशे पूर्वभागे मातृष्वसृसुतः सुखी ॥ ८५३ ॥

राजयो[4]गेन महता बाल्ये राज्याधिपत्यवान् ।
तन्मूलाद्बहुभाग्याप्तिर्जातकस्य महत् सुखम् ॥ ८५४ ॥

मातृष्वसृसुतस्थाने जीवे पूर्णबलान्विते ।
मातृष्वसा भर्तृपुत्र[5]पौत्रभाग्यवती सती ॥ ८५५ ॥

कर्माधिपदशाकाले भाग्याधिपतिभुक्तिषु ।
रमाधिपान्तरे वापि भाग्ययोगो[6] भविष्यति ॥ ८५६ ॥

भाग्याधिपे रविसुते रविभौमयुक्ते
दाराधिपेक्षितयुते भवति त्रिकोणे ।
जातस्य शत्रुसमरे [7]जनकस्य मृत्युः
शस्त्रेण वा निशि निषादकृतेन वा स्यात् ॥ ८५७ ॥

वर्गोत्तमे धनाधीशे लाभेशेन समन्विते ।
भाग्याधिपेन संयुक्ते दिनेशे बहुभाग्यवान् ॥ ८५८ ॥

स्वाम् कर्मगते जीवे हंसयोग[8] इतीरितः ।
मुद्गरांशे पूर्वभागे हंसयोगे[9] च जायते ॥ ८५९ ॥

पश्चाद्भ्रातृविहीनश्च राजपुत्रप्रियः सुखी ।
मातामहो [10]चिरायुष्मान् मातृवंशाभिवृद्धिमान् ॥ ८६० ॥

स्वमातृभगिनीपुत्रो[11] योगेन श्रिय[12]मश्नुते ।
पितृव्याधिपतौ भौमे पञ्चमे मकरांशगे ॥ ८६१ ॥

---

1. बाल्ये मातृष्वसा दुःखी
2. कृत्यात् परसुखी
3. राजपुत्रवरां चेति
4. राजयोगं च महती
5. भैक्षेण प्रियवान् भवेत्
6. योगमिति स्मृतम्
7. स्वपितापमृत्युः
8. योगमिति स्मृतम्
9. योगस्य जातके
10. महचिरायुष्यं
11. पुत्रा
12. वान् सुखी




भाग्याधिपेन संयुक्ते [1]स्वपितार्भातृसंयुत.
मुद्गराशे पूर्वभागे बहुमातुलवान् सुखी ॥ ८६२ ॥

स्वमाता नेत्र[2]वैरूप्या बहुकाले च जीवति ।
भावलग्नाधिपे शुक्रे स्वनवांशे बलान्विते ॥ ८६३ ॥

भाग्याधिपेन संदृष्टे विपद्भाये सुभाग्यवान् ।
सम्पद्भाये व्याकुलं स्यात् पूर्वार्धे शुभदं महत् ॥ ८६४ ॥

उत्तरार्धे सुखं चेति राजद्वारे प्रवेशवान्
[3]मातृव्यसुभर्तृवशात् सुखौघं
तत्पुत्रयोगे [4]न च भाग्यभाक् स्यात् ।
अतीवसौख्यं मुनयो वदन्ति
भोगी सदाभूपति[5]भोगभाक् स्यात् ॥ ८६५ ॥

मीने तुलांशगे जीवे जामित्रे भृगुनन्दने ।
[6]शुभदृष्टे प्रजा[7]तातु राजकीर्तिः प्रतापवान् ॥ ८६६ ॥

योगोऽमल. स्याद्यदि राजकीये
राजानुवर्ती बहुमान[8]युक्तः ।
सदा प्रजारञ्जनतत्परश्च
राज्ञो रसज्ञो रसनामृदुश्च ॥ ८६७ ॥

वर्गोत्तमे निशानाथे राजकीयांशयोगगे ।
राजद्वारे [9]कीर्तियुक्तो मन्त्रारोपनबुद्धिमान् ॥ ८६८ ॥

पापत्रययुते चन्द्रे शकटे [10]च प्रजापते ।
अन्त.कपटवान् रागी लोभपटुतिमान् सदा ॥ ८६९ ॥

---

1 पिताभ्रातृभगिनी — 2. वैरूप्ये
3. मातामातृदशा — 4. बहु
5. सुस्थ — 6. शुभदृष्टे प्रजापतेः
7. भाग्यभः. स्वकीर्ति — 8. भाग्य
9. सुकीर्तियु — 10. [illegible]

वृषभांशे मदे शुक्रे [1]स्वसितेन निरीक्षिते ।
परस्त्रीसङ्गवान् कामी सत्कलत्रप्रियः सुखी ॥ ८७० ॥

सम्पत्तारदशा[2]यां तु दाराधिपतिदायके ।
जन्मदेशे विवाहः[3] स्यात् पश्चात् सौख्य[4]रत. सुखी ॥ ८७१ ॥

मुद्गरांशे पूर्वभागे [5]चित्रर्क्षे च प्रजायते ।
वर्गोत्तमे निशानाथे हरिशङ्करभक्तिमान् ॥ ८७२ ॥

शिवानुग्रहवान्नित्यं शिवभक्ति[6]युतः सुखी ।
[7]तारायोगे सुधर्मात्मा विशेषशिवभक्तिमान् ॥ ८७३ ॥

वैदिकप्रियवान्नित्यं देवब्राह्मणपोषकः ।
किंचिच्छकटयोगेन शत्रुराजभयप्रदः ॥ ८७४ ॥

शत्रुनिग्रहवांश्चेति स्वकार्यनिरतः सुखी ।
चित्राप्रसूतः प्रियकार्य[8]कर्ता
सुवस्त्रधारी सुतनुः सुनेत्रः ।
पटुर्महाबुद्धिविशेषयुक्त
उद्दामवाग्वृत्तिविलुब्धचेताः ॥ ८७५ ॥

तुलाचन्द्रे तुलांशे च शन्यङ्गारकसंयुते ।
वयोमध्ये महाभाग्यं हव्यकव्यप्रदः सुखी ॥ ८७६ ॥

पितृभाग्यविहीनश्च समुपार्जितभाग्यवान् ।
कालान्तरे शत्रु[9]जेता कीर्तिमांश्चेन्नसंशयः ॥ ८७७ ॥

दीर्घालोचनवान् रागी [10]शान्तः कुटिलकार्यवान् ।
तुलांशके महाराज[11]कार्यतन्त्रप्रवीणवान् ॥ ८७८ ॥

---

1. असितेन
2. शान्त्यादि
3. विवाहं
4. प्रद।
5. चित्रानक्षत्रजातके
6. प्रदः
7. स्वभयो
8. भूपा
9. जयं
10. शान्तः
11. राजा

कीर्तिमान् साधुसद्वृत्तो विद्वज्जनरतः सदा ।
पराक्रमी महाप्राज्ञस्तृतीयांशे [1]च जायते ॥ ८७९ ॥

तुलांशगे युते चन्द्रे बुद्धिमान् कीर्तिमान् सदा ।
विद्यावान् मधुराभाषी बाल्ये पितृविनाशवान् ॥ ८८० ॥

तुलांशे मध्यमे काले चन्द्रे पापद्वयेक्षिते ।
पितुर्दुर्मरणं चेति निपातादिभयं महत् ॥ ८८१ ॥

तद्दोषपरिहारार्थं शान्तिं कुर्याद्विचक्षणः ।
वस्त्रयुग्मं कालदण्डं [2]रजतेन च भैरवम् ॥ ८८२ ॥

काल[3]दण्डंच दत्त्वासाधूक्ष[4]दोषाद्विमुच्यते ।
[5]भाग्यवृद्धिर्मध्यकाले नवमे पापखेचरे ॥ ८८३ ॥

लग्नात् पञ्चमगे पापे पि[6]त्ररिष्टं विनिर्दिशेत् ।
लग्नात् पञ्चमगे मन्दे भाग्ये[7]शांशे प्रजायते ॥ ८८४ ॥

तद्दशायां पित्र[8]रिष्टं बाल्ये वा नात्र संशयः ।
पञ्चमांशकगे राशौ लग्नाद्भाग्ये गतेयदि ॥ ८८५ ॥

बाल्ये च क्लेशदारिद्र्यं पश्चाद्भाग्यार्थपुत्रवान् ।
वनान्तरपुरे वासी [9]कुत्सितप्रभुसेवकः ॥ ८८६ ॥

स्वराजज्ञानिमूलेन मनोव्याकुलमादिशेत् ।
मुद्गरांशे पूर्वभागे जामित्रे भृगुनन्दने ॥ ८८७ ॥

लग्नाद्भाग्ये गते [10]राशौ कष्टत्रययोगवान् ।
दारद्वये सुतार्थादिसुसन्तानवान् सदा ॥ ८८८ ॥

कालान्तरे दारहानि[11]क्लेशं प्राप्नोति भूरिशः ।
नूतनगेहनिर्माणे प्राप्तराज्यं महत् सुखम् ॥ ८८९ ॥

---

1. तु कलके
2. रजतादिक
3. पञ्च
4. दोषं न विद्यते
5. भोगादयं
6. पित्रा
7. भांशश्चाप्यते
8. पित्रा
9. च ध
10. लग्न
11. हानि.

नरवाहनभूपासि[1] स्त्रीप्रजालाभमादिशेत ।
सुतेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ॥ ८९० ॥

सुतेश क्रान्तदृष्टे वा सन्तानोत्सवमादिशेत् ।
रूमे गुरुस्थिते काले कर्माधिपतिदायगे ॥ ८९१ ॥

मुद्गरांशे प्रजातस्य[2] स्त्रीप्रजालाभमादिशेत् ।
सुतेशांशे तत्त्रिकोणे चन्द्राधिपतिभुक्तिषु ॥ ८९२ ॥

अतीव क्लेशकाल.[3] स्यात् प्रसुनाशवशाद्दिपत् ।
सराजस्वजनद्वेषं स्त्रीमूलाद्व्याकुलं महत् ॥ ८९३ ॥

अष्टाविंशति[4]मारभ्य ह्येकोनत्रिंशवत्सरे ।
मुद्गरांशे प्रजातस्य चान्तरिछद्रं मनोव्यथा ॥ ८९४ ॥

[5]षष्ठाष्टमव्ययगते ससिते शशाङ्के
दुःस्थानगे कुजसुतेरमिजे न दृष्टे ।
जातः प्रसिद्धविभवो बहुशौर्ययुक्तः
कालान्तरे मृतिमुपैत्यरिशस्त्रघातैः ॥ ८९५ ॥

—:*:—

## ॥ नवदुर्गावरणपूजा ॥

तद्दोषपरिहारार्थं दुर्गावरणमीश्वरम् ।
यामलोक्तप्रकारेण दानं कुर्याद्विचक्षणः ॥ ८९६ ॥

[6]कुलीनं च सुदैवज्ञं वेदवेदाङ्गपारगम् ।
आचार्यं[7] वरयित्वैवनवदुर्गाप्रसाद[8]दम् ॥ ८९७ ॥

स्वर्णपद्मासनासीनं त्रिणेत्रं चन्द्रशेखरम् ।
शङ्खारिवरदाभीतिहस्तं पीनाम्बरावृतम ॥ ८९८ ॥

---

1. पातिः 2. प्रजातश्च
3. कालं 4. समांशादि
5. षष्ठाष्टमव्ययगतावसितेशशा 6. सुन्दरं
7. आचावरण चेति 8. कृप्

सुप्रसन्नमुखीं[1] दुर्गां वनमध्ये निवा[2]सिनीम् ।
महामायां भगवतीं [3]ध्यात्वा पूजां समाचरेत् ॥ ८९९ ॥

पूजां गृहाण कृपया [4]ह्यरिशत्रुभयापहे ।
[5]निर्मितं च सुवर्णेन नक्रवाहं जलेश्वरम् ॥ ९०० ॥

नागपाशधरं देवं बन्धमोचनदायकम् ।
वामभागे च देव्यास्तु वरुणं चार्चयेत् सुधीः ॥ ९०१ ॥

वृषे दक्षिणपादं च विष्टभ्य स्थितमीश्वरम् ।
शूलहस्तं त्रिणेत्रं च ह्युमया सहितं शिवम् ॥ ९०२ ॥

कपालपाणिं चन्द्रार्धभूषणं परमेश्वरम् ।
देव्याश्च दक्षिणे भागे पूजयेदासनादिभिः ॥ ९०३ ॥

नवदुर्गायाश्च पूजां जपहोमं च दारुणम् ।
ध्यात्वा फलत्रयीं चान्ते दानं कुर्याद्विचक्षणः ॥ ९०४ ॥

पार्श्वद्वये वारुणरुद्रयु[6]क्ता
नवाख्य[7]दुर्गां धृत रक्तवस्त्राम् ।
[8]ध्यात्वा ह्युमां शत्रु निवारणार्थ-
मारोग्यभाग्यार्थसुखादिसिद्ध्यै ॥ ९०५ ॥

क्रूरान्तरे क्रूरकाले द्वादशाष्टमजन्मभे ।
स्फुटयोगं गते मन्दे [9]ह्यथशान्ति समाचरेत् ॥ ९०६ ॥

अतीवश्रियमाप्नोति यावदायुष्यवान् सुखी ।
गुरुनाडीफले ग्रन्थे [1]विस्तरेण मयोच्यते ॥ ९१७ ॥

रविभौमार्क[2]जाश्चैवसंख्यायोगे पृथक् पृथक् ।
रिपुवृद्धिक्षयादि स्या[3]त्ततत्कारकनिर्णयः ॥ ९१८ ॥

षष्ठाष्टमव्यये चन्द्रे [4]स्वसितेन युतेक्षिते ।
शुभदृष्टिविही[5]ने च क्षतयोगांशनाडिगे ॥ ९१९ ॥

शत्रुवृद्धिभयापत्र [6]ह्यायुधेन महाविपत् ।
चन्द्रे शनियुते दृष्टे [7]यस्यां नाड्यां प्रजायते ॥ ९२० ॥

शत्रुवृद्धि मनस्ताप [8]मायुधेनमहाविपत् ।
कर्माधिपदशा[9]यां तु भाग्याधिप[10]दशासु वा ॥ ९२१ ॥

षष्ठाष्टमाधीशदाये तु स्थानग्रहभुक्तिषु ।
क्रूराब्दके शत्रुभीतिर्दानं कुर्याद्विचक्षणः ॥ ९२२ ॥

—:*:—

## ॥ स्वर्णपरशुदानविधिः ॥

जपहोमादिकं चैव [11]परशोर्दानमाचरेत् ।
शत्रुभीतिमहातापं [12]ह्यनिष्टग्रहगोचरे ॥ ९२३ ॥

रह[13]स्ये च भयावेश[14]बलिष्ठरिपुसङ्कटे ।
विदध्यात् परशोर्दानं सर्वारिष्टनिवारणम् ॥ ९२४ ॥

1. विस्तराणीति चादिशेत्
2. जेनो वै
3. समानप्रतिनिश्चयत
4. असितेन
5. विहीनश्च
6. आयुधेन
7. यस्या नाडी
8. मायुधेन
9. काले
10. दशे व्यथा
11. परदानमाचरेत्
12. सभव
13. रहस्यादि
14. बलतद्वैरि

अष्टम्यां च चतुर्दश्यां तथा पर्वसु संक्रमे ।
त्रिजन्मऋक्षद्वादश्यां [1]पापानां वासरे सुधीः ॥ ९२५ ॥

देवालये पुण्यदेशे नदीतीरे यथोचितम् ।
[2]रङ्गवल्ल्यादिभिर्भूमौ मण्डपं परिकल्पयेत् ॥ ९२६ ॥

मध्ये द्रोणान् विनिक्षिप्य तस्योपरि च तण्डुलान् ।
आच्छाद्य नववस्त्रेण [3]द्रोणतण्डुलपुञ्जकम् ॥ ९२७ ॥

शतनिष्कसुवर्णेन तदर्धार्धेन वा पुनः ।
अङ्गुलद्वयविस्तारं चतुरङ्गुलमायतम् ॥ ९२८ ॥

छिद्रेण युक्तपरशुं यथाशक्ति च [4]कारयेत् ।
छिद्रे [5]च राजतं दण्डं [6]क्षिप्त्वा वस्त्रेण वेष्टयेत् ॥ ९२९ ॥

कर्ता च प्राङ्मुखासीनो दानसङ्कल्पमाचरेत् ।
शत्रुवर्गकुलच्छेद कुठारेश्वरधा[7]रक ॥ ९३० ॥

मम शत्रुक्षयार्थाय तव पूजां करोम्यहम् ।
सर्वशत्रुक्षयायेति [8]परशुं पूजयेत्ततः ॥ ९३१ ॥

शत्रुक्षयकरायेति मध्यमं परिपूजयेत् ।
[9]क्षत्रियासप्रियं नित्यं मूले त्वावाहयेद् सुधीः ॥ ९३२ ॥

भीषणं भार्गवं रामं मत्स्यर्थिरुधिरोक्षितम् ।
नरमांसवलि[10]प्रीतं क्षत्रियान्त[11]करोद्यतम् ॥ ९३३ ॥

---

1. .........
2. रङ्गवल्ल्यादि.रचयेद्भूभागे परिकल्पयेत् ॥
   सद्वेले वा तदर्धे वा तण्डेन प्रकल्पयेत् ।
3. राशीतण्डुलसंभ्रमम्
4. आचरेत् सुधीः
5. वरा
6. हत्वा
7. धारिणम्
8. परशोः पूजयेत् परम्
9. क्षत्रियासप्रियो नित्यं मूले तु परिकल्पयेत् ॥
   परशुं भीषणमत्स्यर्थो रुधिरोक्षितम् ।
10. प्रीति
11. करोद्यतम्

[1]वदान्यं जामदग्निं च ब्रह्ममुख्यशिवप्रियम् ।
रक्तगन्धाक्षतरक्तपुष्पमाल्याम्बरावृतम् ॥ ९३४ ॥

त्रिणेत्रं जटिलं चण्डमेवं ध्यात्वा[2]च पूजयेत्
[3]करिचर्मधरानन्त कुठारेणारिघातक ।
इदमर्घ्यं प्रदास्यामि गृहाणत्वं नमोऽस्तु ते
[4]विप्रमीश्वररूपं च वस्त्रादिभिरलंकृतम् ॥ ९३५ ॥

शत्रुवंशक्षयार्थाय सर्वाभीष्टप्रसिद्धये ।
भयापमृत्युनाशाय कुठारं प्रददाम्यहम् ॥ ९३६ ॥

स्वर्णत्रययुतं चैव स्वर्णसूत्रं च दक्षिणाम् ।
[5]समां परशुना चैव दक्षिणां मनुरब्रवीत् ॥ ९३७ ॥

शत्रुनाशकरं सत्यं भूपतीनां विशेषतः ।
राजक्रुद्राजकार्यस्य परशुदानमवश्यकम् ॥ ९३८ ॥

भाग्यार्ति परशोर्दाने शत्रुवंशक्षयो[6] भवेत् ।
आयुरारोग्यवान् सत्यमीश्वरेण कृतं पुरा ॥ ९३९ ॥

चिरजीवांशगे चन्द्रे मैत्रांशे देवपूजिते ।
रेवत्यंशे निशानाथे चिरजीवांशनाडिगे ॥ ९४० ॥

[7]पुरतो रिपुहन्ता स्यात् सत्यनाड्यां फलं स्मृतम् ।
पूर्वभागे प्रजातं[8]श्च रक्तवर्णः प्रतापवान् ॥ ९४१ ॥

सदारवंश[9]भाग्यार्तिर्भगिनीत्रयमेत्रवान् ।
धनधान्यसमृ[10]द्धश्च वेदाध्यायी सुपण्डितः ॥ ९४२ ॥

---

1. अदाभ्यं जामदग्निं मुख्याहेतिशिवप्रियम् ।
2. फलं वदेत्
3. कुठारं कृत्तिवसनं प्रियायुधरिपुक्षयम् ॥
4. परमेश्वररूप च वस्त्राद्येन अलङ्कृतः
5. परशुं सममित्याहुर्धीनमं
6. क्षयं गतः
7. पुरो रिपुनिहन्ता स्यात् सत्यनाडीविचक्षणः ।
8. प्रजातस्य
9. वंशे
10. समृद्धिं च

महाकालगुरुद्वारे सर्वाध्यक्षः स्वतन्त्रवान् ।
परिवारप्रियो मानी राजद्वारे सुपूजितः ॥ ९४३ ॥

[1]चन्द्रे वर्गोत्तमे लग्ने गुरुयुक्तेऽथ वीक्षिते ।
दीर्घायुर्द्युतिमान् भोगी सदा सर्वजनप्रियः ॥ ९४४ ॥

रविचन्द्रौ यदैकस्था [2]वेकनाडीं गतौ तथा ।
शुभग्रहयु[3]तौ दृष्टौ धनदांशे सुभाग्यवान् ॥ ९४५ ॥

धनदांशे पूर्वभागे सोदरा दशसंख्यया ।
अथ वा वसुसङ्ख्या च[4] भगिन्यो दीर्घजीविताः ॥ ९४६ ॥

सोदरभ्रातृचत्वारि ह्य[5]थवा पञ्चसङ्ख्यया ।
[6]एको भ्राता चिरायुश्च भ्रातृश्रेष्ठः सुबुद्धिमान् ॥ ९४७ ॥

[7]भ्रातृज्येष्ठः सुखी वाग्मी क्षिप्रकोपप्रसादवान् ।
मैत्रांशगे विलग्नेशे जामित्रे भृगुसंयुते ॥ ९४८ ॥

दीर्घ[8]जीवी च मतिमान् बहुशिष्यप्रशिष्यवान् ।
लग्नकेन्द्रे निशानाथे मूर्खप्रकृतिकोपवान् ॥ ९४९ ॥

गुरुदृष्टियु[9]ते वापि शान्तप्रकृतिमान् सदा ।
मीने मीनांशगे चन्द्रे मिथुने[10] च प्रजायते ॥ ९५० ॥

अतिविक्रमवान् भोगी धर्मपुण्यपुराणवित् ।
षष्ठे बुधयुते सूर्ये स्वसुतेन समन्विते ॥ ९५१ ॥

विष्णुभक्तिरतो नित्यं गुरुदेवातिथिप्रियः ।
ग्रन्थान्तरे महाभोगी बाल्ये क्लेशेन कर्शितः ॥ ९५२ ॥

---

1. वर्गोत्तमे लग्नचन्द्रे
2. एकनाडीं गतेऽपि च
3. युते दृष्टे
4. बहूपानि भगिनीत्रयमायुषम्
5. अथवा
6. एकदा चिरायुर्य
7. भ्रातृ
8. आयुष्यम्
9. युतश्चेति
10. प्रसस जातके

पत्निप्रीतिकरो नित्यं कलत्रद्वयवान् सुखी ।
धनदांशे पूर्वभागे दारवंश[1]शुभाग्यवान् ॥ ९५३ ॥

विवाहानन्तरं[2] सौख्यं राजद्वारे [3]शुभाग्यवान् ।
नीचे मन्दांशगे शुक्रे जामित्रे [4]गुरुसंयुते ॥ ९५४ ॥

धनदांशे प्रजातस्तु[5] जारस्त्रीनायकः सुखी ।
[6]मन्दे जामित्रेभौमांशे शुक्र[7]राहुयुतेक्षिते ॥ ९५५ ॥

धनदांशे प्रजातस्तु[8] दारवंशे कलङ्कवान् ।
नीचे मन्दांशगे शुक्रे स्वभार्या गुप्तजारिणी ॥ ९५६ ॥

[9]भार्या तत्सोदरी चोभे जारिण्यौ धनदांशगे ।
[10]शुक्राष्टके केन्द्रयोगे फलं विस्तारमादिशेत् ॥ ९५७ ॥

दारान्तरे सुतप्राप्तिर्दीर्घमायुश्च विन्दति ।
लग्नात् पञ्चमगे भौमे मन्दे षष्ठत्रिकोणगे ॥ ९५८ ॥

सूतिकागृहरोगेण दारारिष्टं विनिर्दिशेत् ।
धनत्रिकोणगे मन्दे स्वोच्चे वा नीचगे भृगौ ॥ ९५९ ॥

मन्दांशगे सुतारिष्टं सीमन्तशिशुनाशनम् ।
दारान्तरे सुतप्राप्तिर्बहुसन्तानमादिशेत् ॥ ९६० ॥

धनदांशे पूर्वभागे भगिन्येका सुमङ्गली ।
एका पुत्रविहीना च [11]क्लेशिना च तथापरा ॥ ९६१ ॥

ग्रन्थान्तरे गर्ग[12]मते जातस्य धनदांशगे ।
पूर्वभागे भगिन्येका बहुभाग्यवती [13]सती ॥ ९६२ ॥

---

1. वशे
2. अनन्तरे
3. शुभावहम्
4. भृगु
5. प्रजातस्य
6. जामिते मन्द
7. शुक्रे
8. प्रजातस्य
9. धनदांशे प्रजातस्य भार्या तस्य सहोदरी ।
10. शुक्रे चाष्टे
11. क्लेशतापस्वपरे
12. गर्गहोरे धनदांशस्य जातके
13. सुखी

वृद्धपाराश[1]रमते [2]भगिन्यौ द्वे त्रिपुत्रिके ।
एका क्लेशवती नित्यं पुत्रनाशेन कर्शिता[3] ॥ ९६३ ॥

धनदांशे पूर्वभागे स्वपिता [4]त्वेकभार्यकः[5] ।
सोदरौ द्वौ [6]द्विभार्यौ च [7]त्वेकः पुत्रविहीनवान् ॥ ९६४ ॥

स्वमाता गुणशीला च पुत्रभाग्यसमन्विता ।
[8]प्रियजामातृभाग्येन भूषिता कनकप्रभा ॥ ९६५ ॥

[9]भाग्यस्थानाधिपे मन्दे केसरीयोगसयुते ।
धनदांशे प्रजातश्च[10] पूर्वभागे सुभाग्यवान् ॥ ९६६ ॥

[11]आयुष्मन्तौ च पितरौ भगिनीभाग्यवान् सुखी ।
धनदांशे पूर्वभागे केसरीयोग[12]जस्तथा ॥ ९६७ ॥

द्वाविंशाव्दात् परं भाग्यं विशेषरि विशेषतः ।
मैत्रांशगे विलग्नेशे पञ्चविंशात् परं सुखम् ॥ ९६८ ॥

स्वभावस्यं च [13]लभते नित्यश्रीः सौख्यवान् सुखी ।
चीनाम्बरसुभूपाक्षो [14]धनधान्यसमृद्धिमान् ॥ ९६९ ॥

पितृमातृप्रियो नित्यं सोदरभ्रातृवत्सलः ।
चन्द्रांशाधिपतौ जीवे मैत्रांशे मदराशिगे ॥ ९७० ॥

भाग्यगेहे विवाहः[15] स्याच्छ्वशुरश्च द्विभार्यक.[16] ।
शुक्रांशनाडी[17]योगेन भाग्यवान् श्वशुरः सुखी ॥ ९७१ ॥

---

1. परासरे होरे
2. भगिनीद्वे त्रिपुत्रिणी
3. कर्षित
4. एक
5. भाग्यवान्
6. भार्या च
7. एकः
8. भागिनप्रियभाग्येन
9. भाग्यारूढा
10. प्रजातस्य
11. पितृमातृचिरायुषौ
12. जातके
13. प्रवृत्त
14. भाग्यि:
15. विवाहं
16. भाग्यवान्
17. नाडि

सदा रोगभयार्तश्च परस्त्रीसङ्गलोलुप. ।
मैत्रांशे सोदरभागी[1]दायादिजनहीन[2]वान् ॥ ९७२ ॥

बहुपुत्रार्थसंपन्नो महाराजगुरु सुखी ।
[3]अरोगी वेदशास्त्राणां तत्ववेत्ता विशारद ॥ ९७३ ॥

[4]सोदरेषु च य कोऽपि विद्यावान् धनवान् सुखी ।
सोदरा सप्त तेषां द्वौ प्रबलौ राजवल्लभौ ॥ ९७४ ॥

एको भाग्योत्तमश्चेति बहुपुत्रार्थवान् सुखी ।
सम्पत्कारदशाकाले सोदरोत्पत्तिमादिशेत् ॥ ९७५ ॥

मौञ्जीबन्धनसौख्याप्ति[5] कुम्भान्ते मीनगे गुरौ।
विपद्द्याये विवाह[6] स्यां नित्यसौख्ययुत पिता ॥ ९७६ ॥

स्वक्षेत्रधनभूपादि[8]लाभेन सौख्यमश्नुते ।
जनकस्य फल सत्यं विपद्द्याये न सशय ॥ ९७७ ॥

[9]जन्मपाकदशान्त्यादौ विप्लवेन महाविपत् ।
लोके धान्य[10]विनाशेन प्रजाक्षोभो[11] भविष्यति ॥ ९७८ ॥

कन्याशनिस्थिते काले [12]अथवा तौलिगेऽपि च ।
महाहवे गुरुक्लेश [13]प्रजाना विप्लवो भवेत् ॥ ९७९ ॥

विद्यारम्भं पञ्चमाब्दे[14]सप्तमे मौञ्जिबन्धनम्
विपद्द्याये विवाह[15] स्याद्भागशाधिवनिभुक्तिषु ॥ ९८० ॥

चिरजीवांशगे सूर्ये स्थिरराशिचतुष्टये ।
पाण्ड्यदेशे [16]ह्यरिष्टं स्यान्मण्डलाधिपतेर्विपत् ॥ ९८१ ॥

---

1. भ्रातृ
2 हीनज
3. अरोगवेदशास्त्रार्थ ह्दगात
4. सोदरभ्रातृ य कश्चित्
5. आप्ति
6 विवाह
7 नित्यजीवनवान् पिता
8 लाभस्ते
9 पाके जन्मदशान्त्यादि
10 क्षयविन्द्याम्
11. क्षोभ
12 अथवा
13 विप्लवेन प्रजावधि
14 उपनयन
15. विवाह
16 अरिष्ट

विपद्दाये सुतेशांशे स्फुटयोगे गते गुरौ ।
तत्त्रिकोणेऽथवा चेति प्रथमोद्वाहमादिशेत् ॥ ९८२ ॥

चन्द्रलग्नाष्टमाधीशदशायां पापभुक्तिषु ।
पितृव्यजनसन्तापं ज्ञातिवर्गे सुतक्षयम् ॥ ९८३ ॥

सुखेशांशे तत्त्रिकोणे स्फुटयोगे गते शनौ ।
मण्डलाधिपतेर्मृत्युः श्रीराज्यं तदनन्तरम् ॥ ९८४ ॥

तत्काले बहुभाग्याप्ति[1] पितृसौख्यं विनिर्दिशेत् ।
रन्ध्राधिपदशाकाले [2]ह्यशुभग्रहभुक्तिषु ॥ ९८५ ॥

मातृवर्गे [3]ह्यरिष्टं स्यान्मातुलस्य महाविपत् ।
नानाव्याकुलसंप्राप्तिं[4] देहकार्श्यं धनव्ययम् ॥ ९८६ ॥

सहोदरीभाग्यसुसौख्य[5]लाभं
तताम्बिके सौख्यसुभूषणाप्तिम्[6] ।
इष्टार्थसिद्धिं मुनयो वदन्ति
वैवाहिकानन्तरभाग्यवान् स्यात् ॥ ९८७ ॥

सुखेशांशे तत्त्रिकोणे स्फुटयोगे गते शनौ ।
सुखेशदृष्टिराशौ तु पितृपीडां विनिर्दिशेत् ॥ ९८८ ॥

मातृपीडाथवा चेति क्रूरमासे भविष्यति ।
क्षिप्रेणारोग्यमित्याहुर्विपद्दाये फलं स्मृतम् ॥ ९८९ ॥

रन्ध्रे शनिस्थिते काले रन्ध्रेशांशेऽथ वापि च ।
क्षेमदाये दारहानिः [7]श्वशुरश्च मरिष्यति ॥ ९९० ॥

सहोदरी मनस्तापवैधव्याभ्यां च कर्शिता[8] ।
[9]क्लिष्टे तताऽम्बिके चैव द्वितीयोद्वाहमादिशेत् ॥ ९९१ ॥

---

1. ॰आप्तिः
2. शुभग्रहदशान्तरे
3. अरिष्ट
4. प्राप्ति
5. फाल
6. आप्तिः
7. श्वशुरारिष्टनाशनम्
8. कर्शितः
9. ततोऽम्बिका क्रूरमेति

धनदांशे पूर्वभागे युग्म[1]लग्ने च जायते ।
सप्त[2]माब्दे जनक्लेशं राज्याधिपतिनाशनम् ॥ ९९२ ॥

चतुर्विंशे तथा किंचाद्राजपत्नी मरिष्यति ।
तत्पौत्रः प्रबलश्चेति तत्काले बहुसौख्यवान् ॥ ९९३ ॥

पौष्णश्रवणहस्ता[3]र्द्राभरणीवायुमेष्वपि ।
शनैश्चरश्चरन् नृणां दुर्भिक्षभयदः स्मृतः ॥ ९९४ ॥

मिथुनान्त्ये कुलीरादौ कन्यान्ते तौलिगेऽपि च ।
तुलान्ते वृश्चिके चादावनावृष्टिभयं महत् ॥ ९९५ ॥

षष्ठाधिपदशाकाले लाभाधिपतिभुक्तिषु ।
गर्भाधानफलप्राप्तिं[4] श्वशुरारिष्टमादिशेत् ॥ ९९६ ॥

लोके धान्य[5]क्षयेणैव प्रजाक्षोभो[6] भविष्यति ।
रन्ध्राधिपदशाकाले [7]सुखसोदरदायगे ॥ ९९७ ॥

विप्लवेन विनिर्गत्य पश्चिमां दिशमेष्यति ।
पश्चात् [8]स्वदेशमासाद्य शिशुदारादिसौख्यवान् ॥ ९९८

बुधान्तरे क्षेमदाये गोचरे[9]ऽक्षेमगे शनौ ।
अतीव क्लेशकार्य[10] च पत्नीपुत्रविनाशनम् ॥ ९९९ ॥

तुला[11]राशिस्थिते मन्दे दाराधिपतिभुक्तिषु ।
लाभाधिपान्तरे वापि धनलाभं विनिर्दिशेत् ॥ १००० ॥

तृतीयाब्दे त्रयस्त्रिंशे चतुर्विंशतिवत्सरे ।
षट्त्रिंशाब्दे ह्यनावृ[12]ष्ट्या लोके दुर्भिक्ष[13]जं भयम् ॥ १००१ ॥

---

1. लग्नस्य जातके
2. सप्तमांशे
3. आदि
4. प्राप्ति·
5 क्षयं विन्द्यात्
6. क्षोभमिति स्मृतम्
7. विक्रमान्त्ये सुखेऽपि च
8. स्त्रौदेश
9. क्षेमगे
10. कार्याणि दार
11. शनि स्थिते काले
12. अनावृष्टि
13. डाम्बरम्

द्वितीयोद्वाहतः पश्चा[1]ज्ज्ञाता सौख्यान्वितः सुखी ।
गोचरे शनिदोषेण बन्धु[2]भिः सह विप्लवः ॥ १००२ ॥

क्षेमाधिपदशा[3]यां तु प्रत्यग्दाये स्वभुक्तिषु ।
जनकस्य[4]महारोगः स्थाननाशो[5] महाविपत् ॥ १००३ ॥

तुला[6]राशिस्थिते मन्दे सिंहे वा गोचरे तथा ।
विप्लवेन मनस्तापं द्वितीयोद्वाहमादिशेत् ॥ १००४ ॥

क्षेमदाये स्वभुक्तौ च शुभाशुभफलं समम् ।
शुक्रान्तरे स्वजननी व्याकुलानन्तरं सुखम् ॥ १००५ ॥

चतुर्विंशात्समारभ्यपञ्चविंशतिवत्सरे ।
सुवृष्टिः सर्वदेशानामर्घवृद्धिसुभिक्षकृत् ॥ १००६ ॥

धनदांशे पूर्वभागे केसरीयोग[7]श्चोऽपि च ।
पञ्चत्रिंशे फलं चेति विष्णुयोगफलं शुभम् ॥ १००७ ॥

वृषभांशे सुखे [8]राहौ युग्मलग्न[9]समुद्भवः ।
विष्णुयोग [10]इति ख्यातः पञ्चत्रिंशात् परं सुखम् ॥ १००८ ॥

विपद्दाये सुखाद्यास्थिरथवा क्षेमदायके ।
शुभान्तरे [11]कीर्तियुक्तोनरवाहनवान् भवेत् ॥ १००९ ॥

प्रत्यक्ताराधिपे चन्द्रे चिरजीवांशनाडिगे ।
प्रत्यग्दाये सुपुत्रास्त्रिश्चत्वारिंशतिवत्सरे ॥ १०१० ॥

जीवे याव[12]त्फलानि स्युस्तावत्पुत्रा भवन्ति हि ।
[13]आयुष्मन्तौ च पुत्रौ द्वौ पुत्रीत्रययुतः सुखी ॥ १०११ ॥

---

2. प्राप्नुयात्सौख्यं सुखावहम्
1. मिथुनमादिशेत्
3. बन्धिः
4. महद्रोगं
5. नाशः
6. शनिदृष्टे फले
7. जातके
8. राहु
9. समस्य जातके
10. योगमिति ख्यातं
11. सुधीश्चिव
12. फलं सन्ति तावत्सौख्यं सुखवान्
13. पुत्रेण द्वयमायुष्यं

मत्यकाराधिपे चन्द्रे [1]पाके वशुभभुक्तिषु ।
गुरुशुक्रान्तरे वापि पित्र[2]रिष्टं विनिर्दिशेत् ॥ १०१२ ॥

द्विचत्वारिंशगे वर्षे चत्वारिंशतिवत्सरे ।
सप्तत्रिंशेऽथ वा चेति भ्रातृनाशं विनिर्दिशेत् ॥ १०१३

तद्भावाष्टमेशांशे गोचरे शनि[3]संस्थिते ।
तद्भावविनाशेन क्लेशं प्राप्नोति भूरिशः ॥ १०१४ ॥

विष्णुयोगे प्रजातस्य क्षेमदाये महत् सुखम् ।
विपद्दाये[4]ऽपरार्धादौ योगवान् कीर्तिमान् सुखी ॥ १०१५ ॥

सुताधिपदशा[5]यां तु विष्णुयोग[6]समुद्भव ।
पुत्रलाभं महत् सौख्यं गेहे लक्ष्मीकटाक्ष[7]दम् ॥ १०१६ ॥

धनभावे लग्नकेन्द्रे चन्द्रे पूर्णबलान्विते ।
तद्दशायां [8]सौख्ययुक्तो धनधान्यसमृद्धिमान् ॥ १०१७ ॥

भ्रातृद्वेषकलापेन दशान्त्ये व्याकुलं महत् ।
साधनेशदशाकाले [9]गृहश्चैव विभज्यते ॥ १०१८ ॥

वर्गोत्तमे लग्नकेन्द्रे धनभावे निशाकरे ।
लग्नाधिपेन संदृष्टे यावज्जीवं सुसौख्यवान् ॥ १०१९ ॥

धनिक कीर्तिमान् भोगी दारान्तरसुपुत्रवान् ।
आयुष्मन्तौ [10]द्वौ भ्रातरौ वार्धके बहुपुत्रवान् ॥ १०२० ॥

एकसप्ततिवर्षाणि परमायुश्च विन्दति ।
त्रिपञ्चाशेऽपमृत्युश्च शान्त्याशान्तिं प्रयास्यति ॥ १०२१ ॥

---

1. दशायां शुभ
2. पित्रारि
3. कालगे
4. परार्ध(र्धा)दि
5. दशाकाले
6. योगस्य जातके
7. कटाक्षवान्
8. महत् सौख्यं
9. विभागं लभते गृहम्
10. भ्रातृद्वयं चिरायुष्यं

षट्त्रिंशाब्दे ज्वरभयं षोडशाब्दात् परं क्वचित् ।
चतुष्पष्टिसमे मृत्युर्जीविते [1]त्वेकपञ्चतिः ॥ १०२२ ॥

दशाभावफलाध्याये फलं विस्तारमादिशेत् ।
ईशानांशे क्रिये सौम्ये श्यामवर्णस्वरूपवान् ॥ १०२३ ॥

धनदांशे पूर्वभागे विष्णुयोग[2]समुद्भवः ।
देहान्ते विष्णुलोकाप्तिःपुण्यक्षेत्रे मरिष्यति ॥ १०२४ ॥

समातृगेहे जननं नदीप्रा[3]न्त्येऽग्रहारगे ।
पश्चाद्भ्रातृविहीनः[4] स्याद्दीर्घायुः पितृभक्तिमान् ॥ १०२५ ॥

अलसो निपुणः कामी मतिमान् गुणवल्लभः ।
शास्त्रज्ञो धर्मशीलश्च वेदाध्यायी[5] च रूपवान् ॥ १०२६ ॥

वृश्चिकांशे क्रिये सौम्ये निशाकरयुतेक्षिते ।
बाल्ये मसूरिका[6]भीतिः पश्चाद्भ्रातृविनाशवान् ॥ १०२७ ॥

[7]आयुष्मन्तौ च पितरौ स्वपिता भ्रातृभ्रात्रिमान् ।
[8]पितृष्वसा सुमाङ्गल्या पुत्रभाग्यवती [9]सती ॥ १०२८ ॥

कालिकांशगते सूर्ये चित्रिण्यंश गते शनौ ।
ईशानांशे प्रजातस्य[10] दीर्घजीवा पितामही ॥ १०२९ ॥

बाल्ये पितामहारिष्टं योगवान् स्वपिता सुखी ।
धनान्तर[11]पुरग्रामे शूद्रपावस्य[12]संयुते ॥ १०३० ॥

स्वपि[13]दुर्भाग्यवृद्धिः स्याद् द्वितीयाब्दे सुसौख्यवान् ।
ईशानांशकगे सौम्ये भाग्ययोगे[14] च जायते ॥ १०३१ ॥

---

1. एक
2. योगस्य जातके
3. प्रान्त्या
4. विहीनं
5. अध्ययस्वरूप
6. गण्डं
7. पितृमातृन्चिरायुर्भं
8. पितृष्वसैकमाङ्गल्यं
9. सुखी
10. स्व पितामहीचिरायुषी
11. पुरद्वारे
12. कालगे
13. पिता
14. योगस्यजातके

जन्मदाये भाग्य[1]युक्तो गृहे लक्ष्मीकटाक्षवान् ।
सौम्यांशाधिपतौ भौमे [2]बसितेन युतेक्षिते ॥ १०३२ ॥

ईशानांशे मजात[3]स्य सशुद्स्नेहवान् पिता ।
पितामह[4] क्लेशजीवी वाणि[5]ज्येन च जीविन ॥ १०३३ ॥

कृमिरोगवशापन्नो [6]दल्पसन्तानवान् भवेत् ।
मूर्खप्रकृतिमान् रागी दारि[7]द्र्येण च कर्शिन ॥ १०३४ ॥

पितामहाधिपे शुक्रे स्वक्षेत्रे [8]बसितांशगे ।
पितामहस्य [9]भ्रावा तु मामभागे निवासवान् ॥ १०३५ ॥

व्यवसायपरो नित्यं भ्रातृनाशेन कर्शित ।
ब्रह्मचर्यदशापन्नो [10]दाल्पसन्तानवान् भवेत् ॥ १०३६ ॥

जीवाष्टवर्गे सन्तानं पितृव्या[11]भावजं भवेत् ।
पितामहानुजादीनां[12] तत्तद्भावेनचिन्तयेत् ॥ १०३७ ॥

ईशानांशकगे सौम्ये मातुलद्वययोगवान् ।
केचित् पक्षे त्रयश्चेति [13]चिरायुश्चैकमातुल ॥ १०३८ ॥

स्वमाता गुणिनी पूता भ्रातृभ्रात्रीसमन्विता ।
कालान्तरे भ्रातृशोक दु खिता मातृसोदरी ॥ १०३९ ॥

भाग्यारूढे धनाधीशे भाग्ये शुभसमन्विते ।
जन्मदाये गृहक्षेत्रलाभ च स्वपितु सुखम् ॥ १०४० ॥

[14]शूद्र स्वपितृमित्रस्यात् मातरय [15]चेत् सुवाहनम् ।
राजपुत्रप्रसादेन राजतुल्यप्रतापवान् ॥ १०४१ ॥

---

1 वृद्धि
2 असितेन
3 प्रजा तस्य
4 पितामह
5 वाणिज्याश्रमजीवनम्
6 अल्प
7 दारिद्र्ण
8 असित
9 भ्रातृफलममद्वारे
10 अल्प
11 पितृव्यादिफल स्मृतम्
12 अनुजादीनि तत्सोदरिफल वदेत्
13 मातुलश्चैकमायुप
14 स्वपिता मित्रशूद्रश्च
15 चेत्

द्वादशाब्दमिति प्रोक्तं जन्मदाये पिता सुखी ।
[1]शूद्रः स्वपितृमित्रस्याद् धनधान्यसुपुत्रवान् ॥ १०४२ ॥

[2]आयुष्मन्तः पितृव्याश्च हीशानां[3]शे च जायते ।
केचित्पक्षे द्वयं चेति ह्येकोदेशान्तरं गतः ॥ १०४३ ॥

स्मात् कर्मगते सूर्ये नालांशे स्वपिता सुखी ।
पितृ[4]व्येषु च यः कश्चित् पापात्मा दुष्टचेतनः[5] ॥ १०४४ ॥

कर्मे सूर्ये सुखे पापे लग्ने वा धनगे शनौ ।
स्वपितुः सोदरभ्रा[6]तुरङ्गवैकल्यमादिशेत् ॥ १०४५ ॥

कर्मे नालांशगे सूर्ये ईशानांशे [7]च खे बुधे ।
[8]नासिकाकर्णरन्ध्रेषु पितृव्योऽङ्गविकारवान् ॥ १०४६ ॥

मिथुनांशकगे सूर्ये कुजे केतुसमन्विते ।
ब्रह्मबीजादि[9]रोगेण पितृव्यश्च प्रपीडितः ॥ १०४७ ॥

तदभावे व्रणं कुष्ठं हस्तपादतलेषु च ।
पितामह[10]स्य रोगस्तु पितृव्ये [11]च भविष्यति ॥ १०४८ ॥

ईशानांशकगे सौम्ये वसुसङ्ख्याः सहोदराः ।
अथवा ऋतु[12]सङ्ख्याश्च [13]चत्वारो दीर्घजीविनः ॥ १०४९ ॥

शेषं नाशमिति प्राहुर्भ्राता कश्चित् सुभाग्यवान् ।
सुरेशांशे तत्त्रिकोणे कुजांशे वा त्रिकोणगे ॥ १०५० ॥

भ्रातृजन्मर्क्षभं चेति [14]सबलर्क्षे शुभान्विते ।
स्मात् कर्मगते भौमे मेषांशे भ्रातृभ्रात्रिमान् ॥ १०५१ ॥

---

1. स्वपिता मित्रद्रस्य
2. पितृव्यत्रयमायुष्यं
3. अंशस्य जातके
4. पितृव्यस्य च
5.
6. स्वपिता सोदरभ्रातृ
7. सुखे
8. पितृव्यकर्णनेत्रादिमुखे वा
9. योगेन
10. प्रपीतादि
11. पितृव्येन
12. संख्यानि
13. चतुष्टयचिरायुषम्
14. योजयेत्कालवित्तमः

सहोदरीसुतः कश्चिन् पित्तरोगप्रपीडितः ।
स्वपिता शिवभक्तश्च सोदरभ्रातृपोषकः ॥ १०५२ ॥

बन्धुवर्गे सुपूज्यश्च राजद्वारे सुबुद्धिमान् ।
राजन्यस्नेहवान् कामी वेदाध्ययनविघ्नवान् ॥ १०५३ ॥

सौम्य[1] पञ्चदशदोषेण पिता बाल्ये [2]ह्यकिंचनः ।
सौम्ये कालाग्निषष्ट्यंशे ईशानांशे[3] च जायते ॥ १०५४ ॥

कुलस्त्रीसङ्गवान् कामी स्वपिता चलचेतनः ।
भृगोः[4] समांशयोगेन राजद्वारे सुपूजितः ॥ १०५५ ॥

राजन्यस्नेहवान् रागी राजाश्रयवशात् सुखम् ।
ईशानांशकगे सौम्ये स्वपिता शिवभक्तिमान् ॥ १०५६ ॥

शिवपूजापरो नित्यं सेनामात्यप्रियः सुखी ।
कुलस्त्रीसङ्गदोषात्पुत्रशोकेन कर्शितः ॥ १०५७ ॥

भ्रातृना[5]शं च लभते वार्धके क्लेशवान् कचित् ।
बुधे विष्णुकलांशस्थे ईशानांशस्[6] नाडिगे ॥ १०५८ ॥

पिता वैदिकधर्मात्मा हरिशङ्करभक्तिमान् ।
शिवपूजाप्रभावेण वयोमध्ये सुभाग्यवान् ॥ १०५९ ॥

शिवव्रतोपवासेन सर्वपापविनाशवान् ।
देहान्ते पुण्यलोकाप्तिरिहजन्मनि सौख्यवान् ॥ १०६० ॥

मेषे बुधे विष्णुकलांशयोगे
तातांम्बि[7]के सौख्यसुभाग्यवत्यौ ।
वेदान्तशास्त्रागमतत्त्व[8]वेत्ता
[9]त्वष्टादशे भूपतिमैत्रभाक् स्यात् ॥ १०६१ ॥

---

1. दरिद्रवान्    2. सौम्ये
3. अशस्य जातके    4. भृगुः
5. नाशमिति प्रोक्तं    6. अशश्च
7. अम्बिका सौख्यसुभाग्यवन्तः    8. सिद्धये
9. अष्टासुखे

शिवव्रतोपवासादिशिवधर्मपरायणः ।
स्वपि[1]त्रधिकधर्मात्मा पित्रार्जितधनाढ्यवान् ॥ १०६२ ॥

बुधे विष्णुकलांशस्थे ईशानांशस्य नाडिगे ।
निशाकरेण सन्दृष्टे देवीस्तोत्रपरायणः ॥ १०६३ ॥

[2]जातकस्य पिता चैव रामायणपुराणवित् ।
यतिप्रीतिकरो नित्यं राजामात्यप्रसादवान् ॥ १०६४ ॥

मिथुनांशकगे सूर्ये लग्नादुपचये स्थिते ।
नालांशगे प्रजातश्च[3] पितृश्रेष्ठः सुबुद्धिमान् ॥ १०६५ ॥

पश्चाद्भ्रातृविनाशः[4] स्याद्भ्रातृद्वयसुपूजितः ।
भगिनीद्वयवान् रागी विद्याबुद्धि[5]रतः सुखी ॥ १०६६ ॥

लिपित्रयप्रवीणश्च क्षेत्रग्रामाधिकारवान् ।
धनाध्यक्षः सुखी वाग्मी विद्यावा[6]दे जयी तथा ॥ १०६७ ॥

मेषांशगे तुलाचन्द्रे कुलीरेद्वादशांशगे ।
युग्मलग्ने प्रजातश्च जन्मदाये सुसौख्यवान् ॥ १०६८ ॥

जन्माब्दे क्रूरमासे वा द्वितीयाब्दे च वा यदि ।
[7]मान्द्यज्वरप्रपीडां च क्षिप्रेणारोग्यवान् सुखी ॥ १०६९ ॥

ईशानांशकगे सौम्ये[8]रन्ध्राधिपतिदायगे ।
बुधान्तरे जन्मदेशे राजामात्यविनाशनम् ॥ १०७० ॥

गुरुकार्यं[9] प्रकुर्याच्च राजपुत्रवशात् सुखी[10] ।
स्वपितु[11]र्मित्रशूद्रस्य योगपाप्रस्यमादिशेत् ॥ १०७१ ॥

---

1. पिता
2. स्वपिता जातकस्यैव
3. प्रजातस्य
4. विनाशं
5. प्रदः
6. वादेजयप्रदः
7. मान्द्यज्वरप्रपीडादि
8. सौम्य
9. कार्यः
10. सुखम्
11. स्वपितामित्रशूद्रादि

चापारूढे निशानाथे लग्नाद्विक्रमराशिगे ।
तृतीयाब्दे पितुः सौख्यं राजद्वारे शुभाधिकम् ॥ १०७२ ॥

भूषणादिसुवस्त्राप्ति[1] नित्यसन्तोषमादिशेत् ।
पितृव्यमित्रयोगेन धनलाभं विनिर्दिशेत् ॥ १०७३ ॥

[2]व्ययेशाकान्तभवने व्ययेशांशस्य [3]राशिगे ।
स्फुटयोगं गते राहौ स्वपितामहनाशनम् ॥ १०७४ ॥

लाभाधिपान्तरे काले पितृव्यस्य शुभं वदेत् ।
सोदरोत्पत्तिसन्तोषं गेहे कल्याणसंभ्रमम् ॥ १०७५ ॥

स्वपि[4]तुर्मित्रवर्गेषु सन्तानोत्पत्तिमादिशेत् ।
बुधान्तरे तृतीयांशे विष्णुदैवतदर्शनम् ॥ १०७६ ॥

ब्राह्मणप्रभुसन्मानमर्थलाभं विनिर्दिशेत् ।
ग्रामान्तरे सुवस्त्राप्ति[5] राजसन्मानमादिशेत् ॥ १०७७ ॥

जनकस्य फलं सत्यं क्षेत्रलाभं महत् सुखम् ।
वृश्चिकांशकदोषेण जननी व्याकुलं महत् ॥ १०७८ ॥

सहोदरादिसन्तापं पिटकादिज्वराद्भयम् ।
[6]तुलाराशिस्थिते मन्दे लोके दुर्भिक्षजं भयम् ॥ १०७९॥

[7]प्रजाक्षोभं विजानीयान्मण्डलाधिपतेर्विपत् ।
जीवे केत्वन्तरे काले गृहक्षेत्रधनव्ययम् ॥ १०८० ॥

पितृव्यस्य ज्वरं तापं क्रूरमासेऽशुभावहम् ।
बुधान्तरे क्रूरमासे सोदरो [8]रोगपीडितः ॥ १०८१ ॥

लग्नाच्चतुर्थगे [9]राहौ केतुभुक्तौ शुभाधिकम् ।
जन्मदाये फलं वाच्यं बुधभुक्तौ विशेषतः ॥ १०८२ ॥

---

1. आप्ति
2. व्ययेशानि
3. आतके
4. स्वपिता मित्र
5. आप्तिः
6. तुलाशनिस्थिते काले काले दुर्भिक्षडाम्बरम्
7. प्रकुर्वीत
8. उपद्रवंसंभवम्
9. राहु

बन्धुवर्गे सुतारिष्टं बुधभुक्तौ फलं स्मृतम् ।
केतुभुक्तौ सुतप्राप्तिः स्वपि[1]तुर्मित्रवर्गके ॥ १०८३ ॥

जन्मर्क्षाधिपतौ जीवे दशायां शत्रुभुक्तिषु ।
युग्मलग्ने प्रजातस्य मौञ्जीबन्धनमादिशेत् ॥ १०८४ ॥

स्वजन्मदेशे नृप[2]तेस्तत्पूर्वं पाणिसंग्रहः[3] ।
केतुभुक्त्यन्तमारभ्य शुक्रभुक्ताविदं फलम् ॥ १०८५ ॥

लोके धान्यक्षयादीनि पश्चात् स्वस्थं विनिर्दिशेत् ।
स्वपि[4]तुर्मित्रशूद्रस्य पुत्रोत्सवमुसंभ्रमम् ॥ १०८६ ॥

[5]पित्रा सेवितभूपस्य विवाहोत्सवमादिशेत् ।
शुक्रान्तरे पाण्ड्यदेशे स्वपितुः[6] प्रभुदर्शनम् ॥ १०८७ ॥

सेनाधिपतियोगेन [7]ह्यर्थलाभं विनिर्दिशेत् ।
ईशानांशगते सौम्ये [8]आत्मपापत्रयसंयुतः ॥ १०८८ ॥

पाण्ड्यदेशे पितुः सौख्यं राजसन्मानमादिशेत् ।
केतुभुक्त्यन्तमारभ्य शुक्रभुक्ताविदं फलम् ॥ १०८९ ॥

जीवे शुक्रान्तरे काले विप्लवेन [9]प्रजादिषु ।
पश्चात् स्वस्थं प्रकुर्वीत पित्रादीनां[10] शुभावहम् ॥ १०९० ॥

गुरुराहुयुते काले राजामात्यजनावधि ।
राजन्यजनसन्तापो[11] ब्राह्मणानां महद्भयम् ॥ १०९१ ॥

पश्चाद्भूपतिनाशः[12]स्यात् सिंहादित्रयगे शनौ ।
पौष्णश्रवणहस्तार्द्रा[13]भरणीवायुभेष्वपि ॥ १०९२ ॥

---

1. स्वपितामित्र
2. नृपति तत्पूर्वे
3. संग्रहम्
4. स्वपिता
5. स्वपितासेवितनृपति
6. पिता
7. अर्थलाभं
8. मातृप्राबल्यकालेन
9. प्रजाद्यधिः
10. पित्रादीनां
11. सन्तापे
12. नाशे
13. हस्तादि

शनैश्चरश्चरन् नृणां दुर्भिक्षभयदः स्मृतः ।
तुलाशनिस्थिते काले राहुवक्रगते गुरौ ॥ १०९३ ॥

मरुद्वृधाप्रान्त्यदेशे नृपाणां सम[1]रो महान् ।
कोलापु[2]रीप्रान्त्यदेशे [3]ह्यथवा चोलदेशके ॥ १०९४ ॥

मण्डलाधिपतेर्मृत्युर्जीविते कल[4]हो महान् ।
शुक्रान्तरे पितृव्यस्य विवाहोत्सवमादिशेत् ॥ १०९५ ॥

सोदरोत्पत्तिमाप्नोति जनकस्य महत् सुखम् ।
जीवे सूर्यान्तरे काले पितृसौख्यं धनागमः[5] ॥ १०९६ ॥

राजप्रीति[6]श्च भवति स्वक्षेत्रा[7]देर्धनागमः ।
ईशानांशकगे सौम्ये जीवे केत्वन्तरान्तरे ॥ १०९७ ॥

सूर्यान्तरेऽथ वा चेति गृहदारवशाद् व्यथा ।
स्वराजराष्ट्रे कल[8]हो भृत्यामात्यजनेषु च ॥ १०९८ ॥

पश्चात् सौख्यं [9]च लभते शुक्रभुक्तौ शुभादिकम्।
कन्यामासे चाष्टमाब्दे [10]मासत्रु कुम्भादिषु त्रिषु ॥ १०९९ ॥

अतीव क्लेशकार्याणि जातकस्य ज्वराद्विपत् ।
शुक्रान्तरे जीवदाये वेदाध्ययनमादिशेत् ॥ ११०० ॥

चन्द्रभुक्तौ मिश्रफलं सोदरोत्पत्तिमादिशेत् ।
जीवे भौमान्तरे काले पितृपीडा धनक्षयः[11] ॥ ११०१ ॥

अथवा सोदरश्चैव पितृव्यसुतनाशनम् ।
चापे शनिस्थिते काले स्वप्रभोश्च महोत्सवः[12] ॥ ११०२ ॥

---

1. समरं महत्
2. पुरिप्रान्त्यदेशे
3. अथवा
4. कलहं महत्
5. धनागमम्
6. करं चेति
7. क्षेत्रादिधनागमम्
8. कलहं तद्द्वारस्थजनावधि
9. प्रकुर्वीत
10. कुंभादित्रयमासगे
11. क्षयम्
12. महोत्सवम्

तुलाशनौ विवाहः[1] स्याद् वृश्चिके व्याकुलं महत् ।
[2]जन्मनाथदशायां तु दाराधिपतिदायके ॥ ११०३ ॥

ईशानांशप्रजातस्य[3] प्रथमोद्वाहमादिशेत् ।
रन्ध्राधिपदशासन्धिकाले मृत्युज्वरार्दितः ॥ ११०४ ॥

तद्दोषपरिहारार्थं शान्तिं कुर्याद्विचक्षणः ।
स्वमातुलसुतारिष्टमथवा बन्धुनाशनम् ॥ ११०५ ॥

जीवे राह्वन्तरे काले खेदमोदं विनिर्दिशेत् ।
रन्ध्राधिपत्रिकोणर्क्षे रन्ध्रेशात्त्रिकोणगे ॥ ११०६ ॥

स्फुटयोगं गते मन्दे पितृव्यारिष्टमादिशेत् ।
तदभावे पितृव्यस्य विभागमिति चादिशेत् ॥ ११०७ ॥

जन्मदाये फलं सत्यं पितृभावफलं शुभम् ।
पितृव्यदारामयबन्धुशोकं[4]
स्वर्भानुभुक्तौ गुरुदायकाले ।
सूर्यान्तरान्त्यादिमनोविचारं
चन्द्रान्तरे क्लेशफलं विदुः ॥ ११०८ ॥

तत्तद्भावाष्टमेशांशस्फुटयोगं गते शनौ ।
तत्तद्भावविनाशादि योजयेत् कालवित्तमः ॥ ११०९ ॥

ईशानांशकगे भाग्य[5]योगो ह्येकादशाब्दके ।
जन्मदाये विवाहः[6] स्यात् पितृभाग्यवान् सुधीः ॥ १११० ॥

क्रमात्तद्वेदाध्ययनं सप्तदाये दृढं स्मृतम् ।
शास्त्राभ्यासं प्रकुर्वीत सोदरोद्वाहमादिशेत् ॥ ११११ ॥

सहोदरविवाहः[7] स्यात् पाके जन्मदशान्तरे ।
स्वजन्मदेशे नृपते[8]र्दारारिष्टं विनिर्दिशेत् ॥ १११२ ॥

---

1. विवाहं
2. पाके जन्मदशान्त्यादि
3. प्रजतस्य
4. शोक
5. योग एकादश च वत्सरे
6. विवाहं
7. विवाहं
8. नृपतिः

अन्तरान्तर्दशामार्गे मस्ताराष्टकवर्गके ।
ईशानांशे मजातस्य[1] फलं विस्तारमादिशेत् ॥ १११३ ॥

तुलागुरुदशारम्भे तुलाच[2]न्द्रे च संस्थिते ।
स्वमुक्तौ[3] व्याकुलं चेति स्वपि[4]तुर्मित्रवर्गके ॥ १११४ ॥

स्वमातुलसुतारिष्टं सम्प्रदाये स्वमुक्तिषु ।
बुधान्तरे सौख्यमेति विद्यालाभ[5]युतः सुखी ॥ १११५ ॥

शुक्रान्तरे मन्ददाये [6]स्वेकविंशतिवत्सरे ।
ईशानांशे मजातस्य[7] स्वमावस्थं विनिर्दिशेत् ॥ १११६ ॥

धूनेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ।
धूनाधिपदशाकाले [8]पितामह्याश्च नाशनम् ॥ १११७ ॥

तत्त्रिकोणे जन्मदाये पिताम[9]ह्याः सहोदरी ।
[10]तस्याः सोदरमृत्युं च योजयेत् कालवित्तमः ॥ १११८ ॥

द्वात्रिंशाब्दे पि[11]त्ररिष्टं रन्ध्राधिपतिमुक्तिषु ।
सुखादिपदशाकाले मातृवंशोऽ[12]प्यरिष्टकृत् ॥ १११९ ॥

लग्नाद्वा चन्द्रलग्नाद्वा सुखेशांश त्रिकोणगे ।
स्फुटयोगं गते मन्दे मातृनाशं विनिर्दिशेत् ॥ ११२० ॥

सहोदरभ्रातृशोकं कर्मेशांशत्रिकोणगे ।
स्फुटयोगप्रकारेण योजयेत् कालवित्तमः ॥ ११२१ ॥

तत्तद्भावाष्टमेशांशद्रेकाणे द्वादशांशके ।
स्फुटयोगं गते मन्दे तत्तद्भावविनाशनम् ॥ ११२२ ॥

---

1. प्रजातश्च
2. चन्द्रस्य जातके
3. भुक्त्या
4. स्वपिता
5. लाभप्रदः
6. एकविंशति
7. प्रजातश्च
8. स्वपितामहिनाशनम्
9. पितामहि
10. सहोदरे वा मृत्युश्च
11. पिता
12. अरिष्टकृत्

स्फुटांश[1]के गते जीवे तवद्भावेमहत् सुखम् ।
भावाभिवृद्धिमाप्नोति योजयेत् कालवित्तमः ॥ ११२३ ॥

कर्मेशांशत्रिकोणे वा कर्मेशद्वादशांशगे ।
स्फुटयोग गते मन्दे राज्याधिपतिनाशनम् ॥ ११२४ ॥

सुतेशांशत्रिकोणर्क्षे द्रेकाणां[2]शे च राशिगे ।
स्फुटयोगं गते मन्दे लोके दुर्भिक्ष[3]जं भयम् ॥ ११२५ ॥

[4]कर्मेशांशत्रिकोणे वा गोचरेऽमरपूजिते ।
राजा राष्ट्रं सुखं [5]चैव दुर्भिक्षभयनाशनम् ॥ ११२६ ॥

[6]ईशानांशे भाग्ययोगे जायते स सुखी नरः ।
[7]आजन्मायुष्यपर्यन्तं भाग्यवांश्चेन्न संशयः ॥ ११२७ ॥

[8]क्षेमाधिपकदशान्त्ये च ह्यपमृत्युर्भविष्यति ।
प्रत्यग्दाये [9]कालमृत्यू रन्ध्राधिपतिभुक्तिषु ॥ ११२८ ॥

सप्तषष्टिसमे मृत्यु[10]मापत्सन्यासमादिशेत् ।
कमलांशे सुते मन्दे भूसुतेन निरीक्षिते ॥ ११२९ ॥

युग्मलग्ने प्रजातस्य [11]बाल्ये मातृविनाशनम् ।
पश्चाद्भ्रातृविहीनश्च ज्येष्ठभ्रातृसमन्वितः ॥ ११३० ॥

[12]द्वे भगिन्यौ चिरायुष्यौ स्वपिता च द्विभार्यकः[13] ।
कमलांशकगे नक्रे मन्दे कुजनिरीक्षिते ॥ ११३१ ॥

[14]सापत्निमातृजैश्चान्यैर्भगिनीभ्रातृभिर्युतः ।
उद्वाहानन्तरं माता परलोकं प्रयास्यति ॥ ११३२ ॥

---

1. योगगे
2. शस्यद्रेष्काणां
3. डाम्बरम्
4. दुर्भिक्षे स्फुटयोमांशे
5. चेता
6. भाग्ययोगे प्रजातस्य ईशानांशस्य जातके
7. जन्मदा
8 पाके क्षेमदशासन्धिरपमृत्युस्तथाश्रियः
9. मृतिचेति
10. रापत्स
11. बाले
12. भगिनीद्वयमायुष्यं
13. भार्यवान्
14. सापत्निमातृजाश्चान्ये भ्रातृप्राप्तिसमन्वितः ।

दारवंशे सुभाग्याप्तिः स्वपिता भ्रातृहीनवान् ।
मङ्गलांशे पूर्वभागे [1]स्वमलांशकगे शनौ ॥ ११३३ ॥

उच्चारूढे प्रजातश्च[2] भाग्यवांश्च सुबुद्धिमान् ।
विष्णुभक्तिरतो नित्यं श्वश्रूश्वशुरभक्तिमान् ॥ ११३४ ॥

पितृभक्तिविहीनश्च स्वदारभ्रातृवत्सलः ।
बुधक्षेत्रे कुजांशस्थे मन्दे कुजनिरीक्षिते ॥ ११३५ ॥

वन्ध्या[3]योग इति ख्यातः कमलांशे [4]ह्यपुत्रवान् ।
केचित् पक्षे [5]गर्गमते कमलांशे सुते शनौ ॥ ११३६ ॥

[6]गर्भस्रावातुरा पत्नी त्वसितेन निरीक्षिते ।
अन्यगोत्रसुतप्राप्तिः कमलांशे सुते शनौ ॥ ११३७ ॥

वन्ध्यावस्थाफलं चेति दत्तपुत्र[7]प्रदं भवेत् ।
सुतेशांशपतौ भौमे भार्गवेण समन्विते ॥ ११३८ ॥

ज्योतिश्शास्त्रार्थतत्त्वज्ञः [8]सोदर्याश्च सुतप्रियः ।
कमलांशे सुतेऽस्ति श्यामवर्णः शुभाकृतिः ॥ ११३९ ॥

अदृष्टशाली धर्मात्मा किंचित्स्थूलशरीरवान् ।
आढ्यो दारप्रियो रोगी [9]मेहरोगेण दुःखितः ॥ ११४० ॥

कमलांशकगे मन्दे [10]वातरोगी सुबुद्धिमान् ।
कालान्तरे नेत्ररोगी ज्येष्ठभ्रातृविनाशवान् ॥ ११४१ ॥

तत्पुत्रि[11]कां पोषयित्वा बन्धुवर्गैः सुपूजितः ।
कमलांशे निशानाथे कमलांशकगे शनौ ॥ ११४२ ॥

---

1. अमलांश
2. प्रजातस्य
3. वस्थामिति प्रोक्तं
4. अतुनवान्
5. गार्ग्यहोरे
6. गर्भस्रावं तुरंगायः अ
7. प्रदो
8. सहोदरि
9. मेहप्रकृतिदेहवान्
10. स्वशुक्लां
11. पुत्रिका सुपोषिण्या

मङ्गलांशे प्रजातस्य[1] पितुर्दीर्घायुरादिशेत् ।
कमलांशे विलग्नेशे सूनुतेन निरीक्षिते ॥ ११४३ ॥

वाम्ये जल[2]भयार्तश्चमसूरी[3]ज्वरपीडितः ।
उद्वाहानन्तरं भाग्यं दारवंशे सुखी भवेत् ॥ ११४४ ॥

लग्नाधिपतिद्रेक्का[4]णराशौ पुत्रर्क्षभं विदुः ।
शुक्रद्रेक्का[5]णराशौ वा दारजन्मर्क्षभं विदुः ॥ ११४५ ॥

वत्त्रिकोणेऽथ वा चेति कमलांश[6]समुद्भवः ।
सुकुमारशरीरः स दत्तपुत्रः सुबुद्धिमान् ॥ ११४६ ॥

विद्यावान् मधुराभाषी विनीतो धर्मवत्सलः ।
जन्मप्रभृति श्रीमान्स्याद्यावदायुष्यभाग्यवान् ॥ ११४७

कमलांशे विलग्नेशे कर्मेशेन निरीक्षिते ।
स्त्रीराज्यकाले भाग्यं स्याद्राज[7]पत्न्या च पूजितः ॥ ११४८ ॥

स्वशु[8]क्रांशांशयोगेन विपद्दाये [9]सुभाग्यवान् ।
चीनाम्बरसुभूपाप्तिः पित्रादि[10]श्रीयुतः सुखी ॥ ११४९ ॥

जन्मदाये कुम्भचक्रे जन्ममासे जलाद्भयम् ।
कमलांशे [11]रोगमाता मृतप्रा[12]या च जीवति ॥ ११५० ॥

संपद्दाये पापचक्रे [13]कन्यायां तौलिगे शनौ ।
कमलांशे मातृशोकमुद्वाहानन्तरं वदेत् ॥ ११५१ ॥

पापचक्रदशाकाले [14]जातस्य कमलांशके ।
मौञ्जीबन्धनकालः स्यात्तुलान्त्ये वृश्चिके गुरौ ॥ ११५२ ॥

---

1. प्रजातश्च पितृदीर्घायु
2. भयं विन्द्यात्
3. द्रेक्काणे
4. द्रेक्काणगे राशौ
5. शुक्रद्रेक्काणगे
6. अशस्य जातके
7. पत्नीप्रतापवान्
8. स्वशुक्रां
9. शुभावहम्
10. प्रियवान्
11. मातृपीडा
12. मृतप्रायोप
13. कन्यगे
14. कमलांशस्य जातके

स्वज्येष्ठभ्रा[1]तुरुद्वाहो गेहे कल्याणसंभ्रम.[2] ।
क्रूरमासे देहजाड्यं मातृपीडा क्वचित् क्वचित् ॥ ११५३ ॥

पापचक्रदशाकाले स्वगोत्रे[3] ज्ञातिनाशनम् ।
अपरार्धे जातकस्य विवाहोत्सवमादिशेत् ॥ ११५४ ॥

जलांश[4]नाड्यां चन्द्रे च ह्यष्टमे राहुसंयुते ।
चापचक्रदशाकाले द्वितीयोद्वाहवान् पिता ॥ ११५५ ॥

भावेशाक्रान्तभवने कर्माधिपतिचक्रगे ।
अतीव श्रियमाप्नोति श्वशुरस्य वशात् सुखम् ॥ ११५६ ॥

चन्द्रांश[5]चक्रसन्धौ च जातस्य कमलांशके ।
स्वजन्मदेशे नृपतेर्मरणं तत्र निर्दिशेत् ॥ ११५७ ॥

चन्द्रांशचक्रे कलहं ग्रामान्तर[6]निवासवान् ।
लग्नेशे कमलांशस्थे केन्द्रलाभत्रिकोणगे ॥ ११५८ ॥

द्वादशाब्दात् परं भाग्यं विपद्वाये श्रिया [7]युतम् ।
चापचक्रे द्वितीयांशे मकरांशे निशाकरे ॥ ११५९ ॥

स्वजन्मदेशे नृपतिर्मसूरी[8]ज्वरतापितः ।
जीवांशगे तत्त्रिकोणे स्फुटयोगं गते शनौ ॥ ११६० ॥

कमलांशे प्रजातस्य राज्याधिपतिनाशनम् ।
कमलांशकगे सूर्ये वृश्चिके [9]च प्रजायते ॥ ११६१ ॥

इदमेव फलं सत्यं पितृभाग्यविहीनवान् ।
वृश्चिकाङ्गा[10]रके चन्द्रे जातस्य कमलांशके ॥ ११६२ ॥

बहुभाग्याभिवृद्धि स्याद्दारसौख्यं विनिर्दिशेत् ।
भेदभ्रातृसुपुत्राप्ति[11] ज्येष्ठभ्रातृशुभावहम् ॥ ११६३ ॥

---

1. भ्रातुरुद्वाहे
2. संभ्रमम्
3. गोत्रज्ञाति
4. नाडिगे चन्द्रे अष्टमे
5. चक्रगे सन्धिकमलांशस्य जातके
6. कलहंग्रामान्तरनिवासकृत्
7. यहम्
8. ज्वरगण्डवान्
9. कालजातके
10. चन्द्रे अङ्गारके कमलांशस्य जातके
11. सुप्राप्तिः

धनधान्यसमृ[1]द्धिं च पित्रादीनां सुखं वदेत् ।

कीटाजपञ्चाननकर्कटेषु
चरन् शनिः क्षुद्भयदः प्रजानाम् ।
[2]वृष्टेर्भयं क्षुद्रगुदामयः स्यात्
तथापि जीवन्ति जनाः कथंचित् ॥ ११६४ ॥

[3]शनिप्रथमपर्याये स्थिरराशिचतुष्टये ।
स्फुटयोगं गते मन्दे जन्मदेशे जनावधिः ॥ ११६५ ॥

राज्याधिपतिनाशादिप्रजाक्षोभं विनिर्दिशेत् ।
कमलांशे तुलाचक्रे गोचरे नवमे शनौ ॥ ११६६ ॥

जन्मदेशे राज्यपते[4]रिष्टमिति चादिशेत् ।
मीनांशगे मदाधीशे वृश्चिके कालचक्रगे ॥ ११६७ ॥

स्वदारवंशे सन्तापं श्वश्रूश्वशुरनाशनम् ।
तुलाचक्रे दारवंशे मत्कलत्रविनाशनम् ॥ ११६८ ॥

स्वदारसोदरभ्रा[5]तुरायुषेन महाविपत् ।
राज्याधिपे भाग्यगते भाग्याधिपतिचक्रगे ॥ ११६९ ॥

अतीव क्लेशकार्याणि योगभङ्गं शुभाशुभम् ।
चन्द्रलग्नाष्टमे भौमे भाग्याधिपतिचक्रगे ॥ ११७० ॥

योगभङ्गं द्वित्रिवारं स्थाननाशं जनक्षयम् ।
तुलाचक्रे तृतीयांशे [6]शुक्रयुक्तौ महाविपत् ॥ ११७१ ॥

संचितार्थविनाशादि क्षेमदाये कुजान्तरे ।
रन्ध्रेशाकान्तभवने द्रेक्काणं स्वनवांशकम् ॥ ११७२ ॥

षड्राशिचक्रे[7] सन्तापं योगभङ्गमवाप्नुयात् ।
क्रूराब्दचक्रगे काले देहरोगधनक्षयम् ॥ ११७३ ॥

---

1. समृद्धिश
2. (वृ)दृष्टिर्भयं क्षुत्र गुदामयं स्यात्
8. शशिप्रदम
4. पतिः अरिष्टमिति
5. भ्रातृ आयुषेन
6. शुक्रयुक्तौ
7. राशिचक्रां

अथवा कलहं चेति स्थाननाशं विनिर्दिशेत् ।
कालचक्रे देहजीवौ गोचरे पापभे शनौ ॥ ११७४ ॥

स्वभेद[1]भ्राता रोगी च मित्रद्वेषं जनक्षयम् ।
बन्धुद्वेषकलापेन व्याकुलं मनुरब्रवीत् ॥ ११७५ ॥

नक्रांशे[2] लग्ने चन्द्रे तुलाचक्रे सुभाग्यवान् ।
त्रिंशोपरि शरैर्वर्षैर्मध्ये भा[3]ग्याभिवृद्धिमान् ॥ ११७६ ॥

तुलाचक्रे तृतीयांशे राजनिष्ठुरमादिशेत् ।
योगभङ्गं[4]च लभते वासं ग्रामे वनान्तरे ।
बन्धुद्वेषं बहुच्छिद्रं संचितद्रविणव्ययम् ॥ ११७७ ॥

अतीव क्लेशकार्याणि पश्चात् स्वस्थं विनिर्दिशेत् ।
तुलाचक्रे सिंहशनौ भ्रातृनाशवशाद्व्यथा ॥ ११७८ ॥

कन्याशनौ धनच्छेदं बन्धुद्वेषं विनिर्दिशेत् ।
क्षेमदाये तुलाचक्रे कमलांश[5]समुद्भवः ॥ ११७९ ॥

केन्द्रयोगफलं किंचिद्गोचरे जन्मभे शनौ ।
चन्द्राद्भाग्यं गते जीवे कमलांश[6]समुद्भवः ॥ ११८० ॥

प्रत्यग्दाये भाग्यवृद्धिर्यो[7]गश्चेत्तौलिगे शनौ ।
निधनाधिपदोषेण देहायासं महद्भयम् ॥ ११८१ ॥

सन्निपातज्व[8]रेणैव ह्यपमृत्युभयं क्वचित् ।
चक्रसन्धिदशाकाले ह्यपमृत्युज्वरार्तिदः[9] ॥ ११८२ ॥

तद्दोषपरिहारार्थं शान्तिं कुर्याद्विचक्षणः ।
कमलांशगते मन्दे धनाधिपतिदायगे ॥ ११८३ ॥

---

1. भ्रातृभे रोगे
2. मकांश
3. भाग्याभि
4. प्रकुर्वीत वनान्तरपुरे वसन्
5. अंशस्य जातके
6. अंशस्य जातके
7. योगं चेत्तौ
8. ज्वरादीनि
9. ज्वरार्तिदम्

स्वभुक्तौ पितृनिर्याणं जीविते भगिनी व्यथा ।
स्वभेदभ्रातृशोकादिक्लेशं च तौलिगे शनौ ॥ ११८४ ॥

[1]मेहरोगं च लभते स्वपुत्रोद्वाहसंभ्रमम् ।
जन्मदेशे शुभागतिः प्रत्यग्दाये स्वभुक्तिषु ॥ ११८५ ॥

कन्याचक्रे पि[2]त्ररिष्टं प्रत्यग्दाये शुभान्तरे ।
स्वभुक्तौ [3]यदि जीवेत् सः भेदभ्रातृविनाशवान् ॥ ११८६ ॥

प्रत्यग्दाये मन्दभुक्तौ [4]जातस्य कमलांशके ।
स्वदार[5]सोदराणां च कन्याचक्रे मृतिं क्वचित् ॥ ११८७ ॥

[6]प्राबल्ययोगेनैकस्य संबन्धाच्छ्रियमश्नुते ।
दिने दिने भातृ[7]र्वृद्धिं धनरत्नाम्बरा[8]धिकम् ॥ ११८८ ॥

राजाधिकारजनिताधिकसंपदश्च
धर्माधिकारज[9]नतोषितस्वप्रवृत्तिः ।
सर्वे गृहेऽपि धनधान्यसमृद्धयश्च
[10]स्युः सर्वथा गुरुदशागमने [11]फलानि ॥ ११८९ ॥

गुरुनाडीफलग्रन्थे [12]जातस्य कमलांशके ।
अन्तर्दशादिमार्गेषु फलं विस्तारमादिशेत् ॥ ११९० ॥

कुलीरच[13]क्रेनिर्याणं जातस्य कमलांशके ।
सिंहसूर्येऽप्यमृत्युश्च मकरान्ते घटे शनौ ॥ ११९१ ॥

वृश्चिके देहबाधा स्यात् स्वसमानजनक्षयम् ।
तत्रिकोणे कुलीराशौ गोचरे शनि[14]संस्थिते ॥ ११९२ ॥

---

1. योगरोगं प्रकुर्वीत
2. पिता
3. जीवितश्चैव
4. कमलांशस्य जातके
5. सोदरभ्रातृ
6. क्वचित् प्राबल्ययोगेन संबन्धेश्रिय
7. वृद्धिंधन
8. अस्तिमान्
9. जनितो
10. स्यात् सर्वथा
11. फलान्ति
12. कमलांशस्य जातके
13. चक्रनिर्याणं कमलांशस्य जातके
14. शनिकालगे

कालमृत्युभयप्राप्तिः शत्रुचक्रे न संशयः ।
कुलीरचक्रे निर्याणं तुलान्त्ये चक्रकालगे ॥ ११९३ ॥

कन्यान्तचक्रगे वापि कन्यामासे मरिष्यति ।
कमलांशकगे मन्दे [1]मासु सिंहादिषु त्रिषु ॥ ११९४ ॥

कृष्णपक्षे सौम्यवारे [2]ह्यतिसारज्वरान्मृतिः ।

—:*:—

## कुंभलग्नेचम्पकांशः

चम्पकांशे विलग्नेशे षष्ठे केतुसमन्विते ॥ ११९५ ॥

चापारूढे प्रजातश्च गर्भश्रीमान् सुखी धनी ।
लग्नारूढपदे जीवे लग्नेशे केतुसंयुते ॥ ११९६ ॥

चम्पकांशे प्रजातश्चधूर्तो मानी खलप्रभुः ।
असाध्यकार्यनि[3]रतो गौरगात्रः सुलोचनः ॥ ११९७ ॥

[4]राजराजस्य मन्त्री च सेनाध्यक्षः सुपूजितः ।
चापारूढयुते जीवे सुकुमारः सुबुद्धिमान् ॥ ११९८ ॥

सर्वैश्वर्ययुतः शान्तः सर्वधर्मकरः प्रभुः ।
चापारूढे कुम्भलग्ने क्रोधी मानी खलप्रियः ॥ ११९९ ॥

अन्त कुटिलवान् रोगी परकार्यार्थवञ्चकः ।
वातप्रकृतदेहश्च किंचिद्रूक्षशरीरवान् ॥ १२०० ॥

बाल्ये कृशतनुः प्राज्ञश्चम्पकांशे सुभुक्तिमान् ।
चम्पकांशे पूर्वभागे राजद्वारे मतिद्धिमान् ॥ १२०१ ॥

मन्त्रालोचनवान्नित्यं महाराजप्रियः [5]सुखी ।

परेङ्गितज्ञो मतिमान् सुखी च
राजाधिकारी[6] बहुमानपूज्यः ।

---

1. सिंहादित्रयमासके
2. अतिसारज्वरे मृतिः
3. निरतागौरकान्त
4. बहुराज्याधिपो मन्त्री
5. सुतः
6. राजाधिकारो

धीपहृजांशे च समध्रिशायु-
भूपालसेवी [1]स्वकुले प्रसिद्धः ॥ १२०२ ॥

पापारूढगते जीवे सिंहांशे [2]भृगुवीक्षिते ।
राजयोगं [3]च लभते वाहनत्रयभाग्यवान् ॥ १२०३ ॥

किंचित् क्षुद्रभयं बाल्ये मा[4]न्द्यज्वरनिपीडितः ।
कोपी क्षिप्रप्रसन्नात्मा षष्ठे मन्दे सुरूपवान् ॥ १२०४ ॥

पितृश्रेष्ठः सदा शूरः पित्तप्रकृतिकोपवान् ।
[5]वातदेही भोगशोलश्चम्पकांशे प्रजायते ॥ १२०५ ॥

चम्पकांशकगे मन्दे चन्द्रे नागांशनाडिगे ।
कुम्भलग्ने प्रजातश्च बहुभ्रातृसमन्वितः ॥ १२०६ ॥

स्वयंतृतीयगर्भः स्याज्ज्येष्ठभ्रातृविहीनवान् ।
[6]भगिन्यो बहुलाः सन्ति सोदरभ्रातृवंशवान् ॥ १२०७ ॥

चम्पकांशे पूर्वभागे केचित्पक्षैकभ्रातृमान् ।
[7]भगिन्यौ द्वे सुमङ्गल्यौ शेषंनाशमुदीरयेत् ॥ १२०८ ॥

सोदराः पञ्च सप्तेति[8] भगिन्येका [9]ह्यमङ्गली ।
[10]आयुष्मत्यस्त्रिसोदर्य एका पुत्रवती [11]सती ॥ १२०९ ॥

पितृस्थानाधिपे शुक्रे पञ्चमे वृश्चिकांशगे ।
चम्पकांशे गते मन्दे कलत्रत्रयवान् पिता ॥ १२१० ॥

पूर्वभागे प्रजातश्च सापत्नीमातृ[12]संयुतः ।
[13]द्वित्रिभेदभगिन्यश्च तासामेका सुमङ्गली ॥ १२११ ॥

---

1. सुकुल
2. गुरुवीक्षिते
3. प्रकुर्वीत
4. मान्द्यनिपीडितम्
5. अनिलानिलभोगान्तः
6. भगिनीबहवश्चेति
7. भगिनीद्वयमाङ्गल्यं
8. सप्त च
9. अमङ्गली
10. सोदरीत्रयमायुष्यं
11. सुखी
12. मातृवान् भवेत्
13. त्रभेदभगिनीद्विस्त्रिरेकामङ्गल्यमादिशेत्

पितृव्याधिपतौ जीवे स्वाहांशे चन्द्रसंयुते ।
निधनाधिपसंयुक्ते स्वपिता भ्रातृशोकवान् ॥ १२१२ ॥

पितृष्व[1]सुर्बहुत्वं च द्वित्रिसङ्ख्या चिरा[2]युषी ।
[3]भर्त्रानुगमनं कुर्यात् क्लेशिता च तथापरा ॥ १२१३ ॥

स्वाहांशगे सुखे सूर्ये चम्पकांशकगे शनौ ।
पूर्वभागे पिता भोगी दीर्घायुर्द्विकलत्रवान् ॥ १२१४ ॥

[4]पितामहश्चिरायुष्मान् पुत्रशोकेन कर्शितः ।
स्वपि[5]तुः सोदरभ्रातृपुत्रभावे मृतिं वदेत् ॥ १२१५ ॥

पितृस्थानाधिपे शुक्रे पञ्चमे गुरुवीक्षिते ।
चम्पकांशे पूर्वभागे स्वपिता बहुभाग्यवान् ॥ १२१६ ॥

लिपि[6]वाक्यप्रवीणश्च राजद्वारे सुपूजितः ।
अमात्यप्रियवान् [7]यज्वा देवब्राह्मणपोषकः ॥ १२१७ ॥

अन्नदान[8]रतो नित्यं हरिशङ्करभक्तिमान् ।
अग्रहारप्रतिष्ठा[9]ता वैदिकाचारवान् बहु ॥ १२१८ ॥

मातृविश्वासवान्नित्यं ज्येष्ठभ्रातृसुपोषकः ।
योगकाले भ्रातृ[10]दुःखी बन्धुसंरक्षको भवेत् ॥ १२१९ ॥

चम्पकांशे पूर्वभागे स्वाहांशस्थे निशाकरे ।
स्वपिता धार्मिकः श्रीमान् जीवप्रीति[11]करः सुखी ॥ १२२० ॥

[12]रुद्रमन्त्रजपे निष्ठो धर्मपुण्यपुराणवित् ।
[13]देवालयस्य निर्माता ह्यग्रहारतटाकयोः ॥ १२२१ ॥

---

1. पितृष्वसा
2. चिरायुषम्
3. भर्तानुगमनं चैव क्लेशदा च
4. पितामहचिरायुष्यं
5. स्व पिता
6. वाचकसामर्थ्यं
7. त्यागी
8. सुखी
9. प्रतिष्ठादि
10. शोकं
11. करं शुभम् ।
12. रुद्रजाप्यप्रियो नित्यं
13. देवालयतटाकादिअग्रहार प्रतिष्ठावान्

मध्ये [1]भाग्यसमृद्धश्च राजद्वाराधिकारवान् ।
सेनापतिर्वा मन्त्री वा राज्यतन्त्रप्रवर्तकः ॥ १२२२ ॥

स्वराज्यराष्ट्रे सौख्यासिर्दुष्टनिग्रहणोत्सुकः ।
नाना[2]मार्गे धनप्राप्तिरुपायात् कार्यसाधकः ॥ १२२३ ॥

द्रव्यार्जनसमर्थश्च नानादेशेषु कीर्तिमान् ।
[3]बाल्ये जन्मदशाकाले जातस्य चंपकांशके ॥ १२२४ ॥

सम्पद्दाये पिता बाल्ये पञ्चमाब्दे सुयोगवान् ।
मङ्गलोद्योगभूपा[4]सि तत्पूर्वं भ्रातृशोकवान् ॥ १२२५ ॥

विषूचीभयमापन्नः स्वपिता पुत्रशोकवान् ।
सम्पत्ताराधिपे चन्द्रे नागांशे रविसंयुते ।
तद्दशायां धनप्राप्तिः पितृसौख्यं शुभाशुभम् ॥ १२२६ ॥

लग्नेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ।
स्वपिता बन्धुनाशेन राजन्यजनहेतुना ॥ १२२७ ॥

अतीव क्लेशकर्माणि [5]ह्यायुधेन भयं क्वचित् ।
स्वोच्चे [6]चन्द्रे चंपकांशे दशायां श्रियमश्नुते ॥ १२२८ ॥

सहोदरविनाशः[7]स्याद् गेहे गोधनसंकुलम् ।
स्वपि[8]तुर्भ्रातृवंशेषु [9]ह्यतीव क्लेशमादिशेत् ॥ १२२९ ॥

[10]पितुःप्रयत्नात् कार्याणां सिद्धिर्भवति नित्यशः ।
रन्ध्राधिपेन संयुक्ते चन्द्रे नागांशजातकः[11] ।
स्वमेदमातृजान्[12] हित्वा भ्रातृनाशं विनिर्दिशेत् ॥ १२३० ॥

---

1. भाग्याभिवृद्धिः स्यात्
2. मार्गेर्धनप्राप्तिः
3. बाल्ये महद्दशाकाले चम्पकांशस्य जातके
4. भूपासिस्तत्पूर्वे
5. आयुधेन
6. निचांशगे चन्द्रे
7. विनाशे
8. स्वपिता
9. अतीव
10. स्वपितृप्रयत्नकार्याणि सिद्धिर्भवति नित्यशः
11. जातके
12. मातृजाधान्ये

शनिभुक्त्यन्तमारभ्य चन्द्रस्यान्तर्गते बुधे ।
अतीव क्लेशकार्याणि योगभङ्गं विनिर्दिशेत् ॥ १२४२ ॥

चम्पकांशे पूर्वभागे चन्द्रे सौम्यान्तरान्तरे ।
जन्मादिसप्तमे वर्षे मौञ्जीबन्धनमादिशेत् ॥ १२४३ ॥

भाग्येशांशे त्रिकोणे वा भाग्येशाक्रान्तराशिगे ।
स्फुटयोगं गते मन्दे मौञ्जीबन्धनमादिशेत् ॥ १२४४ ॥

लग्नात् सप्तमगे मन्दे सप्तमाब्दे [1]पितुर्व्यथा ।
[2]राजन्यद्वेषकार्येण योगभङ्गं विनिर्दिशेत् ॥ १२४५ ॥

पञ्चमाब्दे [3]रवौ षष्ठे जातस्यांशे च चाम्पके ।
[4]पितुः राजप्रसादेन बहुमानं विनिर्दिशेत् ॥ १२४६ ॥

सुताधिपान्तरे काले [5]मासु मीनादिषु त्रिषु ।
शुभकार्यं [6]च लभते गेहे कल्याणसंभ्रमः[7] ॥ १२४७ ॥

रन्ध्राधिपान्तरे काले रन्ध्रेशांशत्रिकोणगे ।
स्फुटयोगं गते सूर्ये स्वपितुर्व्याकुलं महत् ॥ १२४८ ॥

राहुचक्रस्थिते वापि राजकार्यवशाद्व्य[8]थाम् ।
चम्पकांशे पूर्वभागे कन्यान्ते तौलिगे शनौ ॥ १२४९ ॥

स्वजन्मदेशे कलहो[9] राजक्षोभो भविष्यति ।
चोलदेशे [10]हरिद्वि स्यादौत्तर्यकलहेन च ॥ १२५० ॥

तुलाशनिस्थिते काले मीनांशे मेषगेऽपि वा ।
तत्त्रिकोणे चोलदेशे [11]हान्यो राजा भविष्यति ॥ १२५१ ॥

अष्टमाब्दे विवाहः[12] स्यादथवानवमाब्दगे ।
सैपद्याये फलं सत्यं लोके दुर्भिक्षजं[13] भयम् ॥ १२५२ ॥

---

1. पिता 2. राजनिष्ठुर
3. भवे षष्ठे चम्पकांशस्य जातके 4. पिता
5. मीनादित्रयमासगे 6. प्रकुर्वीत 7. संभ्रमम्
8. व्यथा 9. कलहं राजक्षोभं 10. अरिऔतर्यकलहेतुना
11 राज्यान्तफलं स्मृतम् 12. विवाहं 13. डामरम्

तुलाशनौ धनप्राप्तिः पञ्चाब्दे चोत्तरा[1] द्वगे ।
शनिसुक्तौ शुभं सत्यं सहस्रारिष्टनाशनम् ॥ १२५३ ॥

महादेवप्रसादेन पितृसौख्यं विनिर्दिशेत् ।
दारेशांशत्रिकोणे च दारजन्मर्क्षमं विदुः ॥ १२५४ ॥

उद्वाहानन्तरं भाव्यं [2]पश्चाद्योगो भविष्यति ।
क्षेमदाये दारहानिं[3] क्षिप्रेणोद्वाहमादिशेत् ॥ १२५५ ॥

विपद्दशान्ते जननी भर्तृक्लेशेन कर्शिता ।
रन्ध्राधिपान्तरे काले सम्पद्दाये [4]पितुर्विपत् ॥ १२५६ ॥

जीविते साध[5]नेशान्ते पितृनिर्याणमादिशेत् ।
सम्पद्दशासन्धिकाले [6]त्वेकादश च वत्सरे ॥ १२५७ ॥

पितामहस्यारिष्टं स्यात्तुलान्ते वृश्चिके शनौ ।
कर्माधिपदशाकाले शुभाशुभफलं समम् ॥ १२५८ ॥

राजान्तरं प्रकुर्वीत ह्यल्पसौख्यं विनिर्दिशेत् ।
सहोदरीमनस्तापं विक्रमेशस्य दायगे ॥ १२५९ ॥

बुधान्तरे व्याकुलं स्याद्गुरुभुक्तौ शुभावहम् ।
सुखेशांशे तत्त्रिकोणे स्फुटयोगे गते शनौ ॥ १२६० ॥

स्वपितुः[7] क्लेशकाल.[8] स्यात् स्वप्रमोक्ष विशेषतः ।
संपद्दाये पाण्ड्यदेशे सर्वाभ्यक्ष्याधिकारवान् ॥ १२६१ ॥

चम्पकांशे पूर्वभागे शनिभुक्तौ फलं स्मृतम् ।
सम्प्राबल्यं क्षेमदाये विशेषपरि सुभाग्यवान् ॥ १२६२ ॥

नरवाहनमूप्राप्तिर्गुरुभुक्तौ विशेषतः ।
कर्माधिपे चन्द्रकेन्द्रे धनलाभेश [9]वीक्षिते ॥ १२६३ ॥

---

1. चोत्तराङ्गणे
2. पुरश्चायोगमादिशेत्
3. हानि.
4. पिता
5. साधनाब्दान्ते
6. एकदश
7. पिता
8. काल
9. शनीक्षिते

स्थिरत्वमे प्रजातश्च[1] कर्मसाम्राज्ययोगजः[2] ।
साम्राज्ययोगे धनिकः प्रतापी
विख्यातकीर्तिर्बहुसंप[3]दाढ्यः ।
सन्मार्गवान् मन्त्रिनृपालसेवी
कामी सदा धर्मरतः सुयोगी ॥ १२६४ ॥

साम्राज्ययोगे कर्मेशे धनेशेन निरीक्षिते ।
तद्दशायां महद्भाग्यं राजान्तरफलं स्मृतम् ॥ १२६५ ॥

क्षेमदाये विशेषः[4] स्वान्मध्ये भाग्याभिवृद्धिमान् ।
राजान्तरे सुतप्राप्तिर्नित्यश्रीसौख्यवान् भवेत् ॥ १२६६ ॥

स्वोच्चे चम्पकांशस्थे [5]तथा साम्राज्ययोगजः ।
भूपाल[6]सेवी स्वपित्रा तत्तुल्याधिकभाग्यवान् ॥ १२६७ ॥

चम्पकांशे भेदमाता स्वभर्त्रानुगमिष्यति ।
विपद्दशान्तरे काले क्षेमदाये स्वभुक्तिषु ॥ १२६८ ॥

क्षमाधिपदशाकाले स्वमा[7]तरिष्टमादिशेत् ।
स्वभुक्तौ व्याकुलं सत्यं विरो[8]धिभिरुपद्रवम् ॥ १२६९ ॥

इदमेव फलं सत्यं कन्यान्तादितुलाशनौ ।
सम्पद्दाये [9]स्वल्पदुःखं क्षेमदाये विशेषतः ॥ १२७० ॥

किंचिच्छकटयोगेन कर्माधिपदशाव्यथाम्[10] ।
क्षेमदाये भाग्यवृद्धिः स्वभुक्तौ व्याकुलं महत् ॥ १२७१ ॥

राजन्यवैष्णवद्वेषं तन्मूलाद्व्याकुलं महत् ।
क्षेमदाये मध्य[11]भागे प्राबल्यं चोत्तरोत्तरम् ॥ १२७२ ॥

---

1. प्रजातस्य
2. योगवान्
3. पदस्थ
4. विशेषं
5. साम्राज्ये योगजातके
6. योगी
7. स्वमाता
8. विरोधादिमुपद्रवम्
9. क्वचिद्वदति
10. व्यथा
11. मध्यखण्डे

चन्द्रकांशे क्षेमदाये गेहे कल्याणसंभवम् ।
सन्तानोत्पविनाशं [1]च पत्नीपीडां विनिर्दिशेत् ॥ १२७३ ॥

धनाधिपदशाकाले रन्ध्राधिपतिभुक्तिषु ।
धनधान्यसुखप्राप्ति[2] पुण्यतीर्थाटने शुभम् ॥ १२७४ ॥

रन्ध्राधिपान्तरे काले स्वदेहे आलस्यमादिशेत् ।
[4]कलत्रपुत्ररोगेन व्याकुलानन्तरं शुभम् ॥ १२७५ ॥

केत्वन्तरे रिपो[5]र्भेन संचितार्थविनाशनम् ।
क्रूरमासे फलं चेति राजचोराग्निजं भयम् ॥ १२७६ ॥

भाग्याधिपान्तरे काले भाग्यवृद्धिसुखोत्सवम् ।
दारवैरं [6]वरिष्टं स्यात् स्वगोत्र विशेषतः ॥ १२७७ ॥

सूर्यान्तरे राजकार्य[7]देशत्यागं शुभाशुभम् ।
चन्द्रान्तरे विशेषाप्ति[8] स्वदेहानपरोकपात् ॥ १२७८ ॥

रसाचतुर्थगे सूर्ये [9]जातो साम्राज्ययोगके ।
वास चेतोगमेन कुत्सितभूराज्यके[10] ॥ १२७९ ॥

सूर्यांशगे तत्त्रिकोणे स्फुटवेगे गते शनौ ।
इदमेव फलं सर्वं योजयेत् कालवित्तमः ॥ १२८० ॥

सर्वदाये राहुभुक्तौ धनरार्थे [11]स्यथा भवेत् ।
सौम्यान्तरे तथा विन्द्यात् [12]फलं साम्राज्ययोगके ॥ १२८१ ॥

रसाधिपदशाफलं रन्ध्राधिपतिभुक्तिषु ।
चन्द्रकांशे पूर्वभागे ज्वरेण मृतिमादिशेत् ॥ १२८२ ॥

---

1. स्त्रपीडा
2. भुक्ति
3. देहाश्रम्
4. पुत्रदारस्त्रीनादि
5. रिपोर्भ स्यात्
6. अरिष्ट
7. राजदण्डं
8. अर्तिः
9. साम्राज्ये योगकारके
10. राज्यगे
11. तदा यथा
12. सौम्यदेहे फलमादिशेत्

हमाद् व्ययगते [1]राहौ परलोको न विद्यते ।
[2]पापसाम्राज्ययोगे च स्वपिता च तथा भवेत् ॥ १२८३ ॥

[3]चिरायुपात्रिपुत्राश्च पुत्रिकैका चिरायुषी ।
चम्पकांशे फलं सत्यं [4]साम्राज्ययोगजस्य च ॥ १२८४ ॥

चत्वारिंशोऽपमृत्युश्च जीविते पुत्रशोकवान् ।
सहोदरक्लेशमेति [5]ह्यर्थनाश विनिर्दिशेत् ॥ १२८५ ॥

चम्पकांशको मन्दे पञ्चपञ्चाशवत्सरे ।
कालमृत्युभयप्राप्ति[6]र्मासेषु मीनादिषु त्रिषु ॥ १२८६

ग्रन्थान्तरे कुंभमासे [7]ह्यथवा वृश्चिकेऽपि च ।
कृष्णपक्षेमृतिं चेति नन्दाभद्रातिथीषु च ।
षोडशाब्दे मृत्युभयं द्वाविंशाब्दे महाविपत् ।
चत्वारिंशोऽपमृत्युश्च शान्त्या शान्तिं प्रया स्यति ॥ १२८७ ॥

मृताव[8]स्थागे रुमेशे दामिनीयोग[9]जस्तथा ।
अतिबाल्ये महाभाग्यं किंचिच्छ्यामतनुः शठः ॥ १२८८ ॥

शास्त्रवेत्ता कविर्मानी बहवस्तस्य सोदराः ।
सोदर्यश्चतया [10]सर्वा मृताश्चैकाऽवतिष्ठते ॥ १२८९ ॥

एकैव कन्यका तस्या विवाहः[11] पञ्चविंशतौ ।
[12]यत्नं करोति विंशाब्दे विघ्नं पापेन कर्मणा ॥ १२९० ॥

जनको म्रियते मार्गे द्वाविंशाब्दे [13]प्रहान्तरे ।
षड्विंशात् परतश्चास्याः समृद्धिरुपजायते ॥ १२९१ ॥

---

1. राहुः परलोकं
2. साम्राज्ययोगे पापेन
3. पुत्रत्रयं चिरायुष्यं पत्रिका एकमेव च
4. साम्राज्ये योगजातके
5. अर्थनाशं
6. मीनादित्रयमासगे
7. अथवाहृश्चिकेषु च
8. अवस्थे
9. जातके
10. सर्वे मृतिश्चैके
11. विवाहे
12. विंशाब्दे यत्नमाप्नोति विघ्नेनैतापकर्मणा
13. प्रहन्तरे

विदेशे [1]च तज्जननी मरिष्यत्यष्ट[2]विंशके ।
षष्ठे मन्दे विनीचांशे मातुर्दीर्घज्वराद्भयम् ॥ १२९२ ॥

बाल्ये पितृविनाशेन क्लेशं प्राप्नोति भूरिशः ।
केदारदामिनीयोगे षोडशाब्दे [3]श्रियायुतः ॥ १२९३ ॥

त्रिंशोपरि शुभाग्याप्ति[4] ज्ञातिनाशात् परं सुखम् ।
मृता[5]वस्थागे लग्नेशे लग्नात् ष[6]ष्ठांशके स्थिते ॥ १२९४ ॥

राजयोगस्य संप्राप्तिरल्पायुर्दायमादिशेत् ।
जन्मदाये पितुर्मृत्यु[7]र्जनन्याश्चाथवा भवेत् ॥ १२९५ ॥

दारिद्र्यक्लेशमापन्नो मेहरोगेण कर्शितः ।
विप्लवेन विनिर्गत्य नानादेशेषु संचरन् ॥ १२९६ ॥

म्लेच्छसेवी महापापी बहुभ्रातृविनाशवान् ।
यावज्जी[8]वं क्लेशितश्च जीवितो पापहेतुना ॥ १२९७ ॥

मृता[9]वस्थागे कर्मेशे पापांशे घोरनाडिगे ।
घोरजीवनवान्नित्यं यावदायुष्यमाप्नुयात् ॥ १२९८ ॥

मृता[10]वस्थागे लग्नेशे दशायां क्रूरभुक्तिषु ।
रन्ध्राधिपान्तरे काले चापमृत्युस्तथा [11]श्रितः ॥ १२९९ ॥

कुंभलग्ने तुलासूर्ये षष्ठे चन्द्रे शुभाग्यवान् ।
भ्रातृभ्रात्रीबहुत्वे स्याज्ज्येष्ठभ्रातृसमन्वितः ॥ १३०० ॥
स्वपि[12]त्रधिकसंपन्नो राजमुद्राधिकारवान् ।
संपद्दाये योगभङ्गं वैष्णवद्वेषहेतुना ॥ १३०१ ॥

---

1. तस्य जननी
2. मारिषौ
3. श्रियावहम्
4. भाप्तिः
5. मृतावस्थे विलग्नेशे
6. षष्ठमांशगे
7. रथवा जननीषु च
8. यमूर्ति क्लेशं जीवनं
9. वस्थे कर्मनाथे
10. मृतावस्थेविलग्नेशे
11. श्रियः
12. स्वपिताधिक

नानाव्याकुलकार्याणि क्लेशं स्याद्रसुवत्सरे ।
राजान्तरवशाद्धाग्यं सोदरोद्वाहतः परम् ॥ १३०२ ॥

प्रबलोद्वाहसौख्याप्ति[1] पितृसौख्यं विनिर्दिशेत् ।
सम्पद्वाये भाग्यनाशं स्वपितामहनाशनम् ॥ १३०३ ॥

पञ्चमा[2]ब्दात् परं चेति नानाव्याकुलवान् पिता ।
विपद्वायेमहत् सौख्यं धूनाधिपतिभुक्तिषु ॥ १३०४ ॥

योगभङ्गं मकुर्वीत जातकस्य क्वचित् सुखम् ।
स्मात् पञ्चमगे के[3]तावसितेन निरीक्षिते ॥ १३०५ ॥

[4]गुल्मरोगेण च पिता काशरोगेण कर्शितः ।
तद्दोषपरिहारार्थं शान्तिं कुर्याद्विचक्षणः ॥ १३०६ ॥

द्वादशादित्यनामानि भानुवारे मपूजयेत् ।
रक्त[5]पीताम्बरादीनि दैवज्ञाय प्रदापयेत् ॥ १३०७ ॥

[6]देहारोग्यं महत् सौख्यं नित्यश्रीनित्यमङ्गलम् ।
षष्ठे चन्द्रे शुभांशस्थे केसरीयोग[7]जस्य च ॥ १३०८ ॥

अपमृत्युभयप्राप्ति [8]रब्दमध्ये महाविपत् ॥ १३०९ ॥

कुंभलग्ने षोडशाब्दे [9]ह्यथवा मनुवत्सरे ।
महारोगभयार्तश्च रोगाधिपतिभुक्तिषु ॥ १३१० ॥

जीविते [10]चिरजीवी च स्वल्पपुत्रो विवाहितः ।
राजमुद्राधिकाराप्तिर्महायोग[11]रतः सुखी ॥ १३११ ॥

रन्ध्राधिपदशाकाले मारकग्रहभुक्तिषु ।
कालमृत्युभयप्रा[12]प्तिं चतुश्चत्वारिंवत्सरे ॥ १३१२ ॥

---

1. सौख्याप्तिः
2. पञ्चमाब्दे
3. केतौ असितेन
4. पितृगुल्मोदराधिकाद्य
5. पट्टाम्बरादीनिदैवज्ञस्य
6. महासौख्यं
7. योगजातके
8. अब्दमध्ये
9. अथवा
10. दीर्घमायुर्थं विवाहं चेदल्पपुत्रवान्
11. प्रद· सुखी
12. प्राप्तिश्च

एकचत्वारिंशकेऽब्दे चत्वारिंशतिवत्सरे ।
चतुश्चत्वारिंशकेऽब्दे क्रूरमासे मृतिं वदेत् ॥ १३१३ ॥

मोहनांशे क्रिये जीवे [1]तुच्चमहसमन्विते ।
मुद्रिकांशे प्रजातश्च रक्तवर्णः शुभाकृतिः ॥ १३१४ ॥

मुद्रिकांशे पूर्वभागे मोहनांशकगे गुरौ ।
वीरशै[2]वो दुराचारो नानाव्यापारजीवकः[3] ॥ १३१५ ॥

भ्रातृद्वययुतो मानी भेदभ्रातृसमन्वितः ।
भगिनीत्रयवान् बाल्ये भ्रातृनाशेन कर्शितः ॥ १३१६ ॥

स्वपिता वार्ध[4]के दुःखी पुत्रनाशेन कर्शितः ।
[5]काशादिना नेत्रपीडा संचितार्थविनाशनम् ॥ १३१७ ॥

मोहनांशकगे शुक्रे कलत्रद्वयवान्पिता ।
पितामहस्तथा विन्द्यात् पूर्वभागे सपत्नीकः ॥ १३१८ ॥

ग्रन्थान्तरे पूर्वभागे स्वपिता च पितामहः[6] ।
बाल्ये क्लेशं [7]च लभते मध्ये भाग्य[8]युतो भवेत् ॥ १३१९ ॥

पुत्रमूलात् सुसन्तोषं वार्धके स्वपितामहः ।
दारान्तरे सुतप्राप्ति[9]र्दास्यां रहसि भोगवान् ॥ १३२० ॥

स्वपिता मध्यवयसि वनान्तरपुरे वसन् ।
[10]अतिश्रीमान् भाग्ययुक्तो धनधान्याम्बरी सुखी ॥ १३२१ ॥

जन्मदाये पिता सौख्यं [11]क्षेत्रग्रामधनेश्वरः ।
नानादेशे प्रसिद्धश्च राजप्रीतिप्रसादवान् ॥ १३२२ ॥

---

1. उञ्च
2. वीरशैवमताचार
4. वार्धकक्लेशं
6. पितामहौ
8. भद्रो भवेत्
10. अतीव प्रियवाक्सिद्ध
3. जीवनम्
5. नेत्रकाशप्रपीडादि
7. प्रवर्तित
9. दासीरति
11. स्वपिता च

पितृभा[1]वांशके शुक्रे ऽस्मात् कर्मत्रिकोणगे ।
स्वपिता वार्धके काले नेत्रहानि[2]युतो भवेत् ॥ १३२३ ॥

पुत्रशोकवशापन्नो भेदभ्रातृवशाद्व्य[3]थाम् ।
कालान्तरे भ्रातृशोकं भाग्यनाशं विनिर्दिशेत् ॥ १३२४ ॥

मोहनांशे पूर्वभागे स्वमत्यंशे निशाकरे ।
स्वपिता मतिमान् रागी पुत्रीपुत्रसमृद्धिमान् ॥ १३२५ ॥

भेदमातृप्रियो नित्यं सत्कलत्र[4]युतो भवेत् ।
वीरशैवागमप्रीतस्तन्मार्गे प्रियवत्सलः ॥ १३२६ ॥

शिवभक्तिरतो नित्यं शिवकैङ्कर्यधर्मवान् ।
द्रव्यार्जनसमर्थश्च नानामार्गे धनार्जकः ॥ १३२७ ॥

लग्नाद्धाग्यं गते [5]राहौ भौमांशे चन्द्रसंयुते ।
धर्माधर्मवि[6]चारेण स्वपिता च धना[7]र्जकः ॥ १३२८ ॥

किंचि[8]त्कठोरपापेन संचितार्थविनाशवान् ।
वार्धके बहुदारिद्र्यं पुत्रनाशं विनिर्दिशेत् ॥ १३२९ ॥

बन्धुद्वेषवशाद्रिष्टं राजपत्नीवशाद्व्य[9]थाम् ।
जातकस्य विपद्दाये [10]ह्यपरार्धे पितुर्विपत् ॥ १३३० ॥

पञ्चविंशात् परं क्लेशं मोहनांशे [11]पितुर्व्यथा ।
संचितार्थव्ययादीनि भाग्यनाशं क्वचित् क्वचित् ॥ १३३१ ॥

सूर्यांशके तत्त्रिकोणे स्फुटयोगं गते शनौ ।
विपद्दाये मोहनांशे पितृनिर्याणमादिशेत् ॥ १३३२ ॥

---

1. भागांशके
2. भवो
3. व्यथाम्
4. भवो
5. राहुः
6. विचित्रेण
7. धनार्थकः
8. अन्याय
9. व्यथा
10. ह्यपरार्धे पिताविपत्
11. पिता

सुखाधिपाक्रान्तराशौ मोहनांशे [1]पितुर्व्यथा ।
वृश्चिकादित्रिमासेषु पितृनिर्याणमादिशेत् ॥ १३३३ ॥

संपद्दाये मातृनाशं तुलान्ते वृश्चिके शनौ ।
अतीव क्लेश[2]कालः स्यात् क्षिप्रेणारोग्यवान् पिता ॥ १३३४ ॥

भाग्यकाले दारनाशं [3]जातस्य मोहनांशके ।
जातकस्य फलं सत्यं स्वपितुश्च तथा भवेत् ॥ १३३५ ॥

सुमर्त्यांशकगे चन्द्रे मोहनांशकगे गुरौ ।
मुद्रिकांशे पूर्वभागे ज्येष्ठभ्रातृविनाशवान् ॥ १३३६ ॥

ज्येष्ठभ्राता सुधर्मात्मा [4]पिता न ऋणमोचकः ।
पुत्रद्वययुतो मानी मिश्रलिङ्ग[5]पूजकः ॥ १३३७ ॥

पितृवाक्यरतो नित्यं किंचिदज्ञानपापवान् ।
पुराब्राह्मणशापेन क्षयरोगप्रपीडितः ॥ १३३८ ॥

जातकस्य विपद्दाये [6]मृतेः पूर्वं पितुस्तथा ।
ज्येष्ठभ्रातृविनाशं [7]च पश्चात् क्लेशं विनिर्दिशेत् ॥ १३३९ ॥

स्वभेदजननीमृत्युः पश्चाद्दारविनाशनम् ।
पितृभ्रातृद्वयनाशं [8]च विपद्दाये न संशयः ॥ १३४० ॥

मोहनांशे विपद्दाये दारद्वयविनाशनम् ।
तृतीयोद्वाहत [9]पूर्वं ग्रन्थिरोगेण कर्शितः ॥ १३४१ ॥

दारेशे शनिसंयुक्ते नवमे राहु[10]संस्थिते ।
मोहनांशे पूर्वभागे कलत्रत्रयवान् भवेत् ॥ १३४२ ॥

ज्येष्ठसार्धैकवत्सरात् तृतीये पुत्रभाग्यवान् ।
दारद्वयविनाशेन यौवने क्लेशवान् भवेत् ॥ १३४३ ॥

---

1. पिता 2. काले
3. मोहनांशस्य जातके 4. स्वपिता ऋणपापवान्
5. पूजितः 6. स्वपितारिष्टपूर्वगे
7. स्यात् 8. स्यात्
9. पूर्वं 10. जातके

मोहनांशकगे जीवे सप्तमे भौम[1]संस्थिते ।
कनिष्ठभ्राता[2] दीर्घायुर्भेदभ्रा[3]ता तथा भवेत् ॥ १३४४ ॥

मुद्रिकांशे पूर्वभागे [4]त्रिभगिन्यश्चिरायुष्यः ।
[5]एका सुमङ्गली चैव दत्तपुत्रवती भवेत् ॥ १३४५ ॥

ग्रन्थान्तरे मुद्रिकांशे पुत्रशोकवती सदा ।
एकपुत्रवती सा च [6]क्लेशिता च तथा परा ॥ १३४६ ॥

[7]अमङ्गल्यौ द्वे भगिन्यौ त्वेका पुत्रवती[8]भवेत् ।
पुत्रि[9]के द्वे सुमाङ्गल्ये सोदरीफललक्षणम् ॥ १३४७ ॥

सुमत्स्यशकगे चन्द्रे स्वर्भानुयुतवीक्षिते ।
स्वभेदभगिनी [10]क्लिष्टा भर्तुः पूर्वं मरिष्यति ॥ १३४८ ॥

स्वपि[11]त्ररिष्टतः [12]पूर्वं स्वभेदजननीरिपत् ।
[13]यदि जीवेत् समाङ्गल्या पुत्रीपुत्रसमन्विता ॥ १३४९ ॥

जीवे केतुयुते जातो मोहनां[14]शे विशेषत. ।
अन्तःकोपी कनिष्ठश्च पाषण्डाचारतत्परः ॥ १३५० ॥

वीरशैव[15]मते योगे जीवे केतुसमन्विते ।
मोहनांशे प्रजातश्च वीर[16]शैवो भवेद्ध्रुवम् ॥ १३५१ ॥

सोदरस्य विशे[17]षेण जातकस्य क्वचित् क्वचित् ।
स्वपिताधिकपाषण्डी [18]सहोदरविहीनवान् ॥ १३५२ ॥

---

1. जातके  2. भ्राता
3. भ्रातुस्तथा  4. भगिनीत्रयमायुषी
5. एका मङ्गल्यमिस्साहुर्दत्तपुत्रदः सुखी ॥
6. क्लेशदा च  7. भगिनी द्वे अमाङ्गल्ये
8. सुखी  9. पुत्रिकाद्वयमाङ्गल्ये
10. क्लेशा  11. पिता
12. पश्चात्  13. जीविते च सुमाङ्गल्यं
14. अंशस्य जातके  15. शैवमतं ध्रुवम्
16. शैवमतं  17. सविशेषे
18. स्वपिता

सुते पापद्वये जातश्चापान्ते पञ्चमस्थिते ।
स्त्रीप्रजा ब[1]हुलाः सन्ति सोदरस्य फलं स्मृतम् ॥ १३५३ ॥

मदेशे शनिसंयुक्ते सोदरस्य सुतस्य च ।
भगिनी[2]पुत्रभार्याणां यदेहुर्मरणं [3]तथा ॥ १३५४ ॥

सुताधिपदशाकाले इदं फलमुदाहृतम् ।
[4]तद्भावभावाधिपेषु योजयेत् कालवित्तमः ॥ १३५५ ॥

मुद्रिकांशे पूर्वभागे [5]जातस्य मोहनांशके ।
कालान्तरे कनिष्ठश्च[6] ह्येकपुत्रयुतो भवेत् ॥ १३५६ ॥

ग्रन्थान्तरे व्यास[7]मते जातस्य मोहनांशके ।
कनिष्ठस्य द्विपुत्राप्तिः स्त्रीप्रजा[8]बहुलाः स्मृताः ॥ १३५७ ॥

एकपुत्रश्चिरायुष्मान् भविष्यति न संशयः ।
गर्ग[9]मते सोदरश्च[10] मोहनांशे मृत[11]प्रजः ॥ १३५८ ॥

कृच्छ्रेणाद्दृष्टयत्नेन ह्येकपुत्र[12]श्चिरायुष्मान् ।
यौवने भेदक[13]भ्राता ग्रन्थिरोगप्रपीडितः ॥ १३५९ ॥

देहकार्श्य[14]युतो नित्यं जीविते पुत्रपुत्रिमान् ।
शुक[15]ग्रन्थे मुद्रिकांशे पूर्वभा[16]गे च जायते ॥ १३६० ॥

भेद[17]भ्राता निरायुष्मान् पुत्रपुत्रीसमन्वितः[18] ।
[19]भवन्ति तिस्रो भार्याश्च यदु प्राबल्ययोगवान् ॥ १३६१ ॥

---

1. बहवः
2. पुत्रिभार्यादि
3. रिपुः
4. तद्भावितद्भावेशोऽपि
5. मोहनांशस्य जातके
6. कनिष्ठस्य
7. व्यास होरे
8. बहवः
9. होरे
10. सोदरस्य
11. मृतप्रजा
12. निरायुषम्
13. भ्रातृग्रन्थि
14. भ्रदो
15. शुकहोरे
16. भागस्य जातके
17. भ्रातृनिरायुर्थ्य
18. समन्विता
19. एकस्त्रिद्विभार्या च

मुद्रिकांशे पूर्वभागे मोहनांश[1]गते गुरौ ।
अष्टौषड्वाभ्रातरश्च पञ्च[2]तेषां चिरायुषाः ॥ १३६२ ॥

भेद[3]भ्राता चिरायुष्मान् सहोदरविनाशकः ।
किंचिद्रोगभया[4]र्तश्च ह्यल्पसन्तानभाग्यवान् ॥ १३६३ ॥

मेषे केतुयुते सूर्ये मोहनांश[5]समुद्भवः ।
अल्पसन्तान[6]युक्तश्च क्षेमदाये सुपुत्रवान् ॥ १३६४ ॥

लग्नात्पञ्चमगे सूर्ये भृगुतेन निरीक्षिते ।
सन्तानप्रतिब[7]धी च कालान्तरात्सुपुत्रवान् ॥ १३६५ ॥

ग्रन्थान्तरे गर्ग[8]मते जातो जातो मृतो भवेत् ।
तद्दोषपरिहारार्थं स्वर्णलिङ्गं प्रदापयेत् ॥ १३६६ ॥

जीवांशे पञ्चमे मन्दे दिवाकरसमन्विते ।
[9]स्वर्णलिङ्गप्रदानेन [10]ह्यायुष्मन्तं च पुत्रकम् ॥ १३६७ ॥

शनिप्रदोषे सायाह्ने चेन्दुवारे प्रदोषके ।
[11]नागलिङ्गप्रदानेन [12]ह्यायुष्मन्तं च पुत्रकम् ॥ १३६८ ॥

तदभावे स्त्रीप्रजा स्यात् पुंप्रजाश्चेन्मृतिं वदेत् ।
[13]गर्भस्रावातुरा भार्या दुर्धुरामयकर्शिता ॥ १३६९ ॥

मोहनांशकगे जीवे पञ्चमे रवि[14]संस्थिते ।
प्रदोषव्रत[15]साध्येन ह्यायुष्मन्तश्च पुत्रकाः ॥ १३७० ॥

---

1. अदावगे
2. सोदरा चतुर्संख्याष्टौ पञ्चसंख्या चिरायुषम्
3. भेदभ्रातृचिरायुष्यं सहोदरविनाशवान्
4. भयार्तश्च स्यु
5. अल्पस्य जातके
6. योग स्यात्
7. बन्धश्च
8. होरे भार्गं जावे मृतप्रजा
9. शिवलिङ्ग
10. पुत्रप्राप्तिचिरायुषम्
11. नागेश्वर
12. आयुष्मन्तं
13. गर्भपातं प्रकुर्वीत स्वदारे दुर्देवम
14. जातके
15. पुण्येन

तृतीयद्वारे पुत्राप्तिः क्षेमदाये न संशयः ।
लग्नात् पञ्चमगे मन्दे पुत्राभावैकदारवान् ॥ १३७१ ॥

पुत्रवांश्चेत् त्रिभा[1]ंश्च मोहनांशसमुद्भवः ।
संपद्दाये सुमृत्याप्ति[2] पित्रादिःश्रियमश्नुते ॥ १३७२ ॥

भाग्ये [3]राहौ मपत्ने च लग्नाधिपतिदायके[4] ।
अपरार्धे भाग्यनाशं पूर्वार्धे सौख्य[5]मश्नुते ॥ १३७३ ॥

मीनांशगे तुलाचन्द्रे जीवे केतुयुते क्रिये ।
मोहनांशे [6]प्रजातस्य जन्मसंपद्दशासुखम् ॥ १३७४ ॥

[7]मातृष्वसा चायुष्यती मातामहविनाशकः[8] ।
सम्पद्दाये स्वजननी मनुवर्षात् परं [9]मृतिम् ॥ १३७५ ॥

द्वात्रिंशे जनकश्चेति [10]प्राप्नोति मरणं तथा ।
द्वात्रिंशे जनकश्चेति चतुस्त्रिंशेऽथवा यदि ॥ १३७६ ॥

[11]स्वपित्ररिष्टतःपूर्वं ज्येष्ठभ्रातृविनाशनम् ।
कलत्रद्वयनाशेन क्लेशं प्राप्नोति भूरिशः ॥ १३७७ ॥

ग्रामान्तरे नदीप्रान्ते लग्नाधिपतिदायके ।
[12]वसंश्च देहजाड्येन लाभमल्पं सुखासुखम् ॥ १३७८ ॥

लग्नेशे रविसंयुक्ते द्वित्रिवारं ज्वराद्भयम् ।
ग्रन्थिरोगमपी[13]डां च शस्त्रबाधां विनिर्दिशेत् ॥ १३७९ ॥

लग्नाद्वा चन्द्रलग्नाद्वा नवमे राहु[14]संस्थिते ।
त्रिंशोपरि मनस्तापं क्लेशं [15]च दशवत्सरम् ॥ १३८० ॥

---

1. भाग मोहनांशस्य जातके
2. आप्तिः
3. राहुप्रपत्नश्च
4. दायगे
5. सौख्यवान् भवेत्
6. जातकस्य
7. मातृष्वसैकमायुर्घ्य
8. विनाशवान्
9. मृतिः
10. मनुवर्षात् परं मृतिः
11. स्वपिता
12. वासं चे देहजाड्यादि
13. पीडादिशस्त्रबाधा
14. जातके
15. क्लेशं चेद्दश

महार्णवपान्त्यदेशे मोहनाश[1]समुद्भवः ।
अतीव क्लेशमाप्नोति [2]वाणिज्ये विघ्नमादिशेत् ॥ १३८१

गृहक्षेत्रविनाशेन व्याकुलं भवति ध्रुवम् ।
यत्र यत्र च व्यापारस्तत्र तत्र विनश्यति ॥ १३८२ ॥

लग्नाधिपदशाकाले [3]ह्यपरार्धेत्विदं फलम् ।
रन्ध्राधिपदशाकाले स्वभुक्तौ व्याकुलं महत् ॥ १३८३ ॥

ज्येष्ठभ्रातृसुतोद्वाहं शुभाशुभफलं स्मृतम् ।
सहोदरीविचारं [4]च ज्वरोपद्रवमादिशेत् ॥ १३८४ ॥

कश्चित् सहोदरभ्रातुः[5] पुत्रो जाड्याभयं तथा ।
दशासंधौ ज्वरं तापं शान्त्या शान्तिं प्रयास्यति ॥ १३८५ ॥

मधुकुम्भप्रदानेन देहारोग्यं विनिर्दिशेत् ।
धनाधिपदशा[6]सन्धौ राहुभुक्तौ नृपावधि ॥ १३८६ ॥

स्वजन्मदेशे नृपतिर्धाराहिष्यात् परं[7]धृतिम् ।
तत्पुत्रः प्रथ[8]लश्चापि महारोगेण कर्शितः ॥ १३८७ ॥

दायादिदशमाप्नोति विपद्धाये मृतिं लभेत् ।
मेदमातृविरोधेन सवितुर्व्याकुलं महत् ॥ १३८८ ॥

विवाहानन्तरं भार्यां नाशयेद्द्वयवत्सरे ।
शूलयोगं प्रकुर्वीत पञ्चमे शनि[9]संस्थिते ॥ १३८९ ॥

तद्दशायां महाक्लेशमपरार्धे न संशयः ।
मार्गारिष्टं प्रकुर्वीत भ्रातरिष्टं तथैव च ॥ १३९० ॥

पितृरिष्टात्परं दुःखं दारिद्र्यं च विनिर्दिशेत् ।
सर्वदाये राहुचन्द्रौ बुधभुक्तौ विशेषतः ॥ १३९१ ॥

---

1. दास्य जातके
2. व्यापारं
3. अपरार्धे इदं
4. स्यात्
5. भ्रातोः
6. सन्धि
7. मृतिः
8. भवतं चेति
9. जातके

अन्तर्दाये क्लेशमेति मोहनांश[1]सम्रद्रवः ।
चक्रसन्धौ[2] दशासन्धौ क्रूराब्दे क्रूरमासगे ॥ १३९२ ॥

अतीव क्लेशकार्यं[3] च ज्वरोपद्रवमादिशेत् ।
मधुकुम्भप्रदानेन देहारोग्य[4]युतो भवेत् ॥ १३९३ ॥

कर्मेशांशे त्रित्रिकोणे स्फुटयोगं गते शनौ ।
कर्मे[5]शद्दिराशौ तु राज्याधिपतिनाशनम् ॥ १३९४ ॥

सहोदरप्रपीडादि तद्रोगं वा सुतामयम् ।
स्वराज्यदेशे नृपतिः स्फुटयोगं गते [6]मृतिम् ॥ १३९५ ॥

पापांशे मिथुने मन्दे गोचरे लग्नान्त्यगे ।
तुलादौ त्रित्रिकोणेषु[7] स्फुटयोगं गते शनौ ॥ १३९६ ॥

लोके धान्यक्षयादीनि घनावृष्टिभयं भवेत् ।
[8]दुष्टखेचरदोषेण भूकम्पं जन्मदेशके[9] ॥ १३९७ ॥

पित्रादि श्रियमाप्नोति गेहे कल्याणसंभ्रमः[10] ।
त्रिंशेऽब्दे चाष्टमाब्दे च [11]ह्यष्टत्रिंशतिवत्सरे ॥ १३९८ ॥

चत्वारिंशेऽथ वा चेति लोके दुर्भिक्षजं[12] भयम् ।
अतीव क्लेशमाप्नोति प्रजाक्षोभं विनिर्दिशेत् ॥ १३९९ ॥

यावन्मार्तण्डसूनु[13]र्वृषमतुलघटे वृश्चिके मीनसिंहे
राश्यामन्वेषयन्[14] स सुरगुरुसहितो राहुवक्त्रे स्थितो[15]वा ।
तावद्दुर्भिक्षकाले नरपतिमरणं क्षुत्पिपासानराणां
ग्रामारण्यश्मशाने नरशिरसहिताः [16]नर्तयन्तः पिशाचाः ॥ १४०० ॥

---

1. शस्य जातके
2. चक्रसन्धि दशासन्धि
3. कार्याणि
4. कर्ते शुभम्
5. कर्मेशो मृतिः
6. कोणे तु
7. अनावृष्टि प्रदो भवेत्
8. भूकम्पमहदोषेण
9. जन्मदेशगे
10. संभ्रमम्
11. अष्टत्रिंशति
12. क्षाम्बरम्
13. सूनो ईषण
14. अन्वेषयन्वै सुरगुरुसहिते
15. स्थिते वा
16. नृत्यन्ते

कोणराशित्रिकोणे वा स्फुटयोगं गते शनौ ।
चोलभूपतिनाशः[1] स्याद्योजयेत् कालवित्तमः ॥ १४०१ ॥

मुद्रिकांशे पूर्वभागे स्थिरराशिचतुष्टये ।
स्फुटयोगं गते मन्दे पाण्ड्यभूपतिनाशनम् ॥ १४०२ ॥

म्लेच्छराज्ये 'कला[2]पेन बहुसेनाश्वनाशनम् ।
[3]जन्मराशिस्थिते मन्दे गोचरेऽष्टम[4]संस्थिते ॥ १४०३ ॥

राजान्तरो[5] म्लेच्छदेशे हताश्वो हतसैनिकः ।
शुभदर्शे तुलाचन्द्रे केसरीयोग[6]जस्य च ॥ १४०४ ॥

क्षेमदाये लक्ष्मीयोगं चत्वारिंशात् परं सुखम् ।
[7]तुलाराशिस्थिते मन्दे क्षेमदाये स्वभुक्तिषु ॥ १४०५ ॥

दशरार्धे शत्रुनाशं प्राबल्यं चोत्तरोत्त[8]रम् ।
अष्टत्रिंशात्परार्धादि योगारम्भं क्वचित् सुखम् ॥ १४०६॥

पुत्रोत्सवफलप्राप्तिः स्वभुक्त्यन्ते न संशयः ।
विपत्तारदशान्त्यादौ[9] क्षेमदाये स्वभुक्तिषु ॥ १४०७ ॥

गृहच्छिद्रफलापेन भ्रातृमूलाद्विचारवान् ।
[10]तुलाराशिस्थिते मन्दे क्षेमदाये स्वभुक्तिषु ॥ १४०८ ॥

महार्णवप्रदेशेषु [11]ब्रह्मगोगृहलाभवान् ।
व्यापारारम्भयत्नः स्यादर्थसिद्धिः शुभावहः ॥ १४०९ ॥

निधनाधिपदोषेण मित्रवर्गे मनोव्यथा ।
स्वदेहायासमाप्नोति बन्धुनाशं विनिर्दिशेत् ॥ १४१० ॥

---

1. भूपतिनाशं
2. कलापं स्याद्
3. जन्मे शनिस्थिते काले
4. मगे शनौ
5. राजान्तरे
6. जातके
7. तुलाशनिस्थिते काले
8. चोत्तरोत्तरे
9. शान्त्यादि
10. तुलाशनिस्थिते काले
11. ब्रह्म

[1]तुलाराशिस्थिते मन्दे विप्लवो कन्यकावधि ।
प्रजाक्षोभं प्रकुर्वीत वासदेशेफलं वदेत् ॥ १४११ ॥
[2]भाग्यच्युतिः शत्रुभिश्च तदभावे मरिष्यति ।
लक्ष्मीयोगदशाकाले स्वप्रावस्थ्यं विनिर्दिशेत् ॥ १४१२ ॥
मीने सौम्यदशारम्भे [3]जातस्य कुम्भलग्नके ।
स्वपुत्रोद्वाहसौख्यं च भुक्तिमध्ये शुभादिकम् ॥ १४१३ ॥
भुक्त्यन्ते व्याकुलं चेति स्वगेहे शिशुनाशनम् ।
राज्यभ्रंशकलापं [4]च पश्चात् स्वास्थ्यं विनिर्दिशेत् ॥ १४१४ ॥
शुक्रान्तरे क्षेमदाये [5]विभक्तो सोदरेण च ।
भेदभ्रा[6]तुश्च पुत्रेण ह्यन्योन्यकलहो भवेत् ॥ १४१५ ॥
सुभर्त्यंशकगे चन्द्रे लक्ष्मीयो[7]गे च जायते ।
सुताधिपदशाकाले ऋणमोचनमादिशेत् ॥ १४१६ ॥
चत्वारिंशात् परं सत्यं यावज्जीवं सुखावहम् ।
क्षेमदाये केतुभुक्तौ बहुलाभं विनिर्दिशेत् ॥ १४१७ ॥
शुक्रान्तरे कलापं [8]च शुभाशुभफलं समम् ।
पुत्रिकोत्पत्तिनाशेन क्लेशं [9]च क्रूरमासके ॥ १४१८ ॥
रंध्रेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ।
रन्ध्रेशः[10]द्वाशौ तु स्वजनारिष्टमादिशेत् ॥ १४१९ ॥
मोहनांशे जन्मशनौ क्रूरमासे रुजातुरः ।
दारवंशे मनस्तापं दारपीडां[11] कचित् कचित् ॥ १४२० ॥

---

1. तुलाराशिस्थिते काले
2. शत्रुभाग्यच्युतिश्चेति
3. कुम्भलग्नस्य जातके
4. कलापं स्यात्
5. सोदरस्य विभागकृत्
6. भ्रातृज्येष्ठसुतायन्योन्यं च विनिर्दिशेत्
7. योगस्य जातके
8. स्याच्छुभा
9. चेत् क्रूरमार्गगे
10. रद्वि
11. दारपीडा

जीवे चतुर्थपर्याये नव[1]मे च शुभावहम् ।
एकादशे भाग्यवृद्धिः पुण्यतीर्थफलं विदुः ॥ १४२१ ॥
दशमे शत्रुनाशं [2]च द्वादशे तु श्रिया[3]युतम् ।
जन्मे क्लेशफलं विन्द्याद् द्वितीये धनलाभवान् ॥ १४२२ ॥
तृतीये सौख्यमित्याहुश्चतुर्थे बहुभाग्यवान् ।
[4]सुते शोभनकार्याणि गेहे कल्याणसंभ्रमः[5] ॥ १४२३ ॥
ज्येष्ठभ्रातृसुतोद्वाहमतीव श्रियमादिशेत् ।
सूर्यान्तरे क्षेमदाये [6]स्वल्पसौख्यं सुखासुखम् ॥ १४२४ ॥
चन्द्रान्तरे व्याकुलं [7]च स्वजनारिष्टमादिशेत् ।
कुजान्तरे भाग्ययोगमल्पसौख्यं सुखावहम् ।
स्वपुत्रदेहजाड्यादिशत्रुनाशं विनिर्दिशेत् ॥ १४२५ ॥
सौम्यचन्द्रान्तरे काले भूपतिक्लेशमादिशेत् ।
कुजान्तरे धनप्राप्ती राहुभुक्तौ शुभाशुभम् ॥ १४२६ ॥
ज्ञाति[8]मध्ये कलापेन गृहच्छिद्रं विनिर्दिशेत् ।
विद्यारम्भं स्वपुत्र[9]श्च सन्तानं [10]च स्वपुत्रिका ॥ १४२७ ॥
क्रूरमासे मनस्तापं [11]वाणिज्ये विघ्नसंभवम् ।
जीवान्तरे धनप्राप्ति[12] बहुव्यापारमादिशेत् ॥ १४२८ ॥
मन्दान्तरे पुत्रपीडामपराधं महाविपत् ।
पूर्वार्धे सौख्यमाप्नोति स्वपुत्रोद्वाहसंभ्रमम् ॥ १४२९ ॥
रन्ध्राधिपदशाकाले लग्नाधिपतिभुक्तिषु ।
अतीव क्लेशकार्याणि क्रूरमासे महाविपत् ॥ १४३० ॥

---

1. नवमांशे
2. स्याद्
3. श्रियावहम्
4. शुभशोभन
5. संभ्रमम्
6. अल्पसौख्यं
7. स्यात्
8. ज्ञातियुद्धकलापेन
9. पुत्रस्य
10. चेत्
11. क्वचिद्व्यापारविघ्नं तु
12. धनप्राप्तिः

स्वजनारिष्टसन्तापो[1] स्वदेहयासंभ्रमः[2] ।
अपमृत्युभयप्राप्तिः शान्त्या शान्ति प्रयच्छति ॥ १४३१ ॥
प्रत्यक्कारदशाकाले शुभर्क्षे च जायते ।
पुत्रिकोद्वाहसौख्याप्ति[4]मर्थलाभं विनिर्दिशेत् ॥ १४३२ ॥
पशुप्रभ्राशगे सर्वे पाके केतुदशान्त्यके[5] ।
एकषष्टिसमे मृत्युः साधनेशस्वभुक्तिषु ॥ १४३३ ॥
क्षमेशे पापसंयुक्ते पद्पञ्चा[6]शात् परं व्यथाम् ।
तद्दशायां मनस्तापमर्थनाशं सुखासुखम् ॥ १४३४ ॥
प्रत्यग्दाये मोहनांशे गोचरेऽष्टमगे शनौ ।
देहपीडा मनस्तापे विघ्नांशे सुतक्षयम् ॥ १४३५ ॥
प्रत्यक्काराधिपे केतौ शुभांशे शुभसंयुते ।
शुभमेव फलं ब्रूयात् क्रूरभुक्तिं विनासुखम् ॥ १४३६ ॥
शुभान्तरे शुभं चेति शुभमासे शुभावहम् ।
धनधान्यसुतप्राप्ति मोहनांशोद्भवस्य च ॥ १४३७ ॥
साधनेशदशामृत्युः स्वभुक्तौ क्रूरमासके[8] ।
राहुकान्तादिमासे वा मरणं भृगुवासरे ॥ १४३८ ॥
मोहनांशे पूर्वभागे लेकषष्टिसमे मृतिः ।
जीविते पुत्रयोगेन मृतिं चैकोनसप्ततौ[9] ॥ १४३९ ॥
मुद्रिकांशे पूर्वभागे मोहनां[10]शोद्भवस्य च ।
पापं पुण्यं समं चेति परलोके[11] तथा भवेत् ॥ १४४० ॥

---

1. सन्तापं
2. संभ्रमम्
3. अंशस्य जातके
4. आप्तिरर्थलाभं
5. दशान्त्यगे
6. पञ्चाशद् परं यथा
7. मोहनांशस्य जातके
8. मासगे
9. सप्ततिः
10. अंशस्य जातके
11. परलोकं

पश्चाद्वैश्यकुले जात इह[1]लोके सुपुत्रवान् ।
चत्वारिंशे महाभाग्यं द्विपञ्चाशात् परं विपत् ॥ १४४१ ॥
जन्मप्रभृति च श्रीमान् मध्ये क्लेशेन कर्शितः ।
पश्चाद्भाग्याभिवृद्धिः स्यात् क्षेमदाये महत् सुखम् ॥ १४४२ ॥
शत्रुनाशात् परं सौख्यं धनलाभं श्रिया[2]युतम् ।
मालिन्यंशे पूर्वभागे कालकूटांशके गुरौ ॥ १४४३ ॥
मतङ्गयो[3]गे जातश्च रक्तवर्णः शुभा[4]कृतिः ।
गुरौस्तोच्चे झषांशस्थे भार्गवेण समन्विते ॥ १४४४ ॥
मतङ्गयोगे जातश्च[5] रक्तवर्णः शुभाकृतिः ।
[6]जीवे नकांशे विख्यातो योगप्राबल्यवान् सुखी ॥ १४४५ ॥
चन्द्रत्रिकोणगे पापे मन्दराहुसमन्विते ।
मालिन्यंशे प्रजातश्च[7] मालिन्यकुलजन्मवान् ॥ १४४६ ॥
मतङ्गयोगे मालिन्यं [8]सोदराणामसंभवम् ।
भेदभ्रातृयुतश्चैव कलत्रत्रयवान् पिता ॥ १४४७ ॥
[9]दीर्घायुष्या च जननी ह्युच्यते सोदरीत्रयम् ।
माता पतिव्रता पूता गृहच्छिद्रेण कर्शिना ॥ १४४८ ॥
बहुकालं [10]सुमाङ्गल्या भ्रातृनाशेन दु खिना ।
मतङ्गयोग एकाकी मतङ्गांशकगे गुरौ ॥ १४४९ ॥
[11]दीर्घायुषी भगिन्येका शेषं नाशमितीरयेत् ।
पितृव्ये वा मातुले वा स्वगोत्रज्ञातिवर्गके[12] ॥ १४५० ॥

---

1. जन्मे
2. श्रियावहम्
3. योगे जातस्य
4. शुभावहः
5. जातस्य
6. विख्यातं नीचनकांशे
7. जातस्य
8. सोदरभ्रातृहीनवान्
9. जननी दीर्घमायुष्यमुच्यते त्रिसहोदरी।
10. सुमाङ्गल्यं
11. भगिन्येका चिरायुष्यं
12. ज्ञातिवर्गगे

मतङ्गयोगेजातस्य स्वभार्यानुगमिष्यति ।
अन्यान्तरे मतङ्गांशे [1]मतङ्गयोगजस्य च ॥ १४५१ ॥

स्वमेद[2]भगिनी चापि स्वभर्त्रानुगमिष्यति ।
वियोगवशतश्चैव नित्यदुःखेन कर्शिता ॥ १४५२ ॥

पि[3]तुरुद्वाहनात् पूर्वं बाल्ये वा मृतिमादिशेत् ।
सुखाधिपे निशानाथे नीचे नक्रनवांशके[4] ॥ १४५३ ॥

भाग्याधिपेन संदृष्टे करिकरांशश्च नाडिगे ।
दुर्भगाव[5]स्थायां जातः सोदरभ्रातृहीनवान् ॥ १४५४ ॥

[6]आयुष्मती च भगिनी माता दीर्घायुषी तथा ।
दुर्भगावस्थागे चन्द्रे भगिन्येका च दुर्भगा ॥ १४५५ ॥

भेदभ्रातृविनाशः[7] स्यात् कलत्रद्वयवान् पिता ।
पक्षान्तरे त्रयश्चेति स्वपिता बहुभाग्यवान् ॥ १४५६ ॥

नानादेशेषु संचारं क्रयविक्रयजीवनम् ।
रत्नधान्यसुवर्णाप्ति[8] नानाव्यापारमादिशेत् ॥ १४५७ ॥

वृद्धिजीवनवान्नित्यं [9]भ्रातृभ्रातृयुतः पिता ।
सूर्यांशके[10] तत्त्रिकोणे सुखेशांशत्रिकोणके[11] ॥ १४५८ ॥

स्फुटयोगं गते मन्दे पितृनाशं विनिर्दिशेत् ।
जन्मदाये [12]पित्ररिष्टं तदभावे विपद्दशा ॥ १४५९ ॥

स्वभुक्तौ मृतिमाप्नोति सम्पद्दाये रुजातुरः ।
मालिन्यशे पूर्वभागे [13]मतङ्गयोगजस्य च ॥ १४६० ॥

---

1. मतङ्गे योगजातके
2. सोदरी चैव
3. पिता उद्वाहनात्
4. नवांशगे
5. आवस्थगे
6. भगिन्येकाः चिरायुर्भ्य मातृदीर्घायुरादिशेत् ।
7. विनाश
8. सुवर्णाप्ति
9. स्वपिता भ्रातृभ्रात्रिमान्
10. सूर्यांशगे
11. कोणगे
12. मतङ्गे योगजातके पिता
12. पिता

जन्मदाये क्वचित् सौख्यं मौञ्जीबन्धनमादिशेत् ।
विपद्दाये विवाहं[1] च कर्माधिपतिभुक्तिषु ॥ १४६१ ॥
विंशोपरि द्विवर्षे वा पञ्चविंशात् परं तथा ।
मतङ्गयोगे [2]चोद्वाहो बाल्ये विघ्न[3]युतो भवेत् ॥ १४६२ ॥
कालकूटांशगे जीवे [4]मतङ्गयोगजस्तथा ।
स्त्रीप्रजानां[5] बहुत्वे च पुंसंतानातुरो भवेत् ॥ १४६३ ॥
दारेशाक्रान्तराशीशो नीचराशि[6]गतो यदि ।
दारान्तरे सुतप्राप्तिर्ज्येष्ठभ्रातृविनाशवान् ॥ १४६४ ॥
व्यये पापद्वये वापि पुनर्भावेऽतिचञ्चलः ।
दारसौख्यविहीनश्च भ्रातृनाशेन कर्शितः ॥ १४६५ ॥
[7]अमङ्गली सोदरी च सर्वथा पापचि[8]त्तवान् ।
दारेशे वृश्चिकांशस्थे [9]मतङ्गयोगजस्तथा ॥ १४६६ ॥
वेश्यास्त्रीसङ्गमी कामी कलत्रद्वययोगवान् ।
मत्यग्दाये मतङ्गांशे सुतेशांशत्रिकोणके[10] ॥ १४६७ ॥
स्फुटयोगं गते मन्दे [11]मातुर्दुर्मरणं वदेत् ।
पश्चाद्दारविनाशेन क्लेशमाप्नोति भूरिशः ॥ १४६८ ॥
द्वात्रिंशे[12]ऽथवाष्टत्रिंशे द्विचत्वारिंशवत्सरे ।
चतुश्चत्वारिंशके[13] वा दारारिष्टं विनिर्दिशेत् ॥ १४६९ ॥
दुर्भगावस्थागे चन्द्रे दशायां भ्रातृनाशनम् ।
दारारिष्टं [14]च लभते शिशुक्लेशं विनिर्दिशेत् ॥ १४७० ॥

---

1. विवाही
2. उद्वाहं
3. भवो
4. मतङ्गे योगेजातके
5. बहवश्चेति सन्तानक्लेशमादिशेत्
6. राशिगते
7. सहोदरी अमाङ्गल्यं
8. चिन्तवान्
9. मतङ्गे योगजातके
10. कोणगे
11. माता दुर्मरणं
12. वाष्टत्रिंशे
13. चत्वारिंशगे
14. प्रकुर्वीत

क्षेमदाये मतङ्गांशे स्त्रीप्रजालाभसौख्यवान् ।
मत्यग्दाये मनस्तापे पुत्रिकोद्वाह[1]तः परम् ॥ १४७१ ॥

नीचग्रहदशाकाले [2]मतङ्गयोगजस्तथा ।
अतीव क्लेशकार्याणि. सञ्चितार्थविनाशवान् ॥ १४७२ ॥

धनाधिपे केन्द्रगते भार्गवेण समन्विते ।
मतङ्गयोगे जातश्च[3] त्रिशताधिकवित्तवान् ॥ १४७३ ॥

मालिन्यंशे पूर्वभागे कर्मेशे राहुसंयुते ।
कुलीरांशे प्रजातस्य [4]व्यापारो मित्रसंयुतः ॥ १४७४ ॥

पशुधान्यधनाढ्यश्च लोभप्रकृतिमान्[5] भवेत् ।
अविद्यातत्परो नित्यं नीचे चन्द्रत्रिभागगे ॥ १४७५ ॥

ग्रामान्तरेऽथ वा चेति नगरे वासमश्नुते ।
मालिन्यंशे पूर्वभागे यावदायुः सुभाग्यवान् ॥ १४७६ ॥
व्यये राहुयुते मन्दे विवादाब्दे धनक्षय.[6] ।
किञ्चिद्वाणिज्यमूलेन मत्यग्दाये धनक्षय.[7]॥ १४७७ ॥

राजकार्यवशात् किञ्चिद्भगिनीनिमित्तहेतुना ।
अल्पभाग्यं च [8]लभते मध्ये मध्ये क्वचित् सुखम् ॥ १४७८ ॥

कालकूटांशगे जीवे [9]मतङ्गयोगजस्य च ।
कन्याविक्रयवित्तादिर्भगिनी[10]कार्यहेतुना ॥ १४७९ ॥

मीने मन्दे कुलीरांशे तुलांशे मदसंयुते ।
मालिन्यंशे प्रजातश्च भगिन्यार्जितवित्तवान् ॥ १४८० ॥

---

1. तत्परम्
2. मतङ्गे योगजातके
3. जातस्य
4. सद्वाणिज्यजीवनम्
5. आविशेत्
6. धनक्षयम्
7. धनक्षयम्
8. प्रभुवीत
9. मतङ्गे योगजातके
10. वा क्वचित् क्वचित्

[1]पित्रार्जितधनैर्युक्तो बाल्ये चैव भविष्यति ।
स्वगोत्रज्ञातिविद्वासिर्भगिनीस्नेहिते[2]न च ॥ १४८१ ॥

षट्शतं च तदर्धं च चतुःशतमथापि वा ।
शताधिकधनं नित्यं वृद्धिवाणिज्य[3]हेतुना ॥ १४८२ ॥

कर्मेशांशमहद्दशाकाले मित्रविनाशनम् ।
भगिनी क्लेशमाप्नोति मात्ररिष्टमतः परम् ॥ १४८३ ॥

मालिन्यंशे स्वजननी वार्धके चित्तविभ्रमम् ।
वनान्तरे मृतिं चेति [4]व्याघ्रादिदुष्टजन्तुभिः ॥ १४८४ ॥

मन्द्यान्तरे मतङ्गांशे लाभेशे राहुसंयुते ।
क्रूरषष्ट्यंशदोषेण [5]मातुर्दुर्मरणं वदेत् ॥ १४८५ ॥

स्वपिता च स्वबाल्ये च स्त्रीहेतोः क्लेशमृत्युमान् ।
सन्निपातज्वरे [6]नैव देशाद्देशान्तरे मृतिः ।
मालिन्यंशे पूर्वभागे वयोमध्ये धनाढ्यवान् ॥ १४८६ ॥

वार्धके क्लेशदारिद्र्यं बाल्ये किंचित् सुखावहम् ।
त्रिचत्वारिंशतः पश्चात् क्लेशः[7] स्याद्वत्सरत्रयम् ॥ १४८७ ॥

प्रत्यग्दाये मध्यखण्डे दारारिष्टं विनिर्दिशेत् ।
विपद्दाये जन्मदेशे वासदेशे च वा यदि ॥ १४८८ ॥

राजान्तरं प्रकुर्वीत प्रत्यग्दाये तथैव च ।
कालिकांशकगे मन्दे मीने राहुसमन्विते ॥ १४९८ ॥

जन्मदाये जन्मदेशे विद्वत्वेन महानपि ।
मण्डलाधिपतेर्मुख्यदेशे राजान्तरे सुखम् ।
षोडशा[8]ब्दात् परं चेति लोके दुर्भिक्षजं[9] भयम् ॥ १४९० ॥

---

1. स्वपितार्जितनान् किंचिद्बाल्ये स्वपितार्जितम् ।
2. सदा 3. जीवनम् 4. दुष्टजन्तुप्रयोगेण वा
5. माता 6. मृत्युः 7. क्लेशं
8. षोडशाब्दे 9. ज्वरम्

सूर्यांशगे तत्त्रिकोणे स्फुटयोगं गते शनौ ।
मालिन्यंशे प्रजातस्य लोके दुर्भिक्ष[1]जं भयम् ॥ १४९१ ॥

मतङ्गयोगे जातस्य मत्यन्दाये हुताशनौ ।
लोके धान्यक्ष[2]येणैव प्रजाक्षोभं विनिर्दिशेत् ॥ १४९२ ॥

व्यये राहुयुते मन्दे कालिकांशे शुभेक्षिते ।
[3]योगः केमिद्रुमोज्ञेयो मनोदुःखं भवेत्तदा ॥ १४९३ ॥

व्यये मन्दे सुखे जीवे [4]दशमे चन्द्रसंस्थिते ।
[5]कर्तरीयोगविख्यातो केमिद्रुमसमो फले ॥ १४९४ ॥

[6]योगद्वये स्थिते चन्द्रे दशायां गुरुभुक्तिषु ।
मतङ्गयोगे जातस्य भार्यारिष्टं विनिर्दिशेत् ॥ १४९५ ॥

क्षिप्रेणोद्वाहमाप्नोति पश्चाच्छन्यन्तरे शुभम् ।
गुरुभुक्त्यन्तमारभ्य शनिभुक्तौ शुभावहम् ॥ १४९६ ॥

मत्यन्दाये विवाहः[7] स्याद्गेहे कल्याणसंभवः[8] ।
धनलाभं च [9]भवति कर्मलाभं महत् सुखम् ॥ १४९७ ॥

सर्वदाये चन्द्रभुक्तौ कुजभुक्तौ च वा यदि ।
जीवान्तरे वा सञ्जापं मत्यन्दाये विशेषतः ॥ १४९८ ॥

कूर्मयोगे दशाकाले [10]दशरार्थे महत् सुखम् ।
बहुव्यापार[11]वृद्धिं च धनलाभं विनिर्दिशेत् ॥ १४९९ ॥

लाभेशांशे तत्त्रिकोणे पष्ठेशांशत्रिकोणके[12] ।
स्फुटयोगं गते मन्दे सहोदरविनाशनम् ॥ १५०० ॥

---

1. बान्धवम्
2. क्षयादीनि
3. एकयोगं मनस्तापं केमुद्रफलं क्वचित् ॥
4. अष्टमे जातके
5. एकयोग क्वचिच्चेत्तिर्लारिधाततथा भवेत् ॥
6. नेति केमुद्रगे
7. विवाहे
8. धनसमम्
9. प्रवर्धित
10. भपरार्थे
11. वृद्धिः स्या
12. त्रिकोणगे

वत्सरे [1]त्वेकपश्चाशे ह्यष्टचत्वारिवत्सरे ।
मान्दिंशे पूर्वभागे सहोदरविनाशनम् ॥ १५०१ ॥

कूर्मयोगे प्रजातस्य लग्नाधिपदशा [2]शुभा ।
दारान्तरे सुतप्राप्तिर्वार्धिके स्त्रीसुसौख्यवान् ॥ १५०२

चन्द्रलग्नाधिपे भौमे दशायां गुरुभुक्तिषु ।
अतीव क्लेशकार्याणि [3]ह्यपमृत्युस्तथाश्रितः ॥ १५०३ ॥

स्वसमानजनारिष्टं स्त्रीप्रजानाशमेव च ।
तदभावे धनच्छेदं दशान्त्ये वा विनिर्दिशेत् ॥ १५०४ ॥

कुंभलग्ने च कीटांशे भूसुतस्य दशासुखम् ।
राहुदाये श्रियं चेति स्वपुत्रोद्वाहसंभ्रमम् ॥ १५०५ ॥

जीवान्तरे त्रिषष्ठ्यब्दे [4]मान्दिंशोद्भवस्य च ।
अपमृत्युभयप्राप्तिः शान्त्या शान्तिं प्रयास्यति ॥ १५०६ ॥

मतङ्गांशे तथा योगे कालकूटांश[5]जस्य च ।
सप्तसप्ततौ वा मृत्युर्नैधनेशदशान्त्यके[6] ॥ १५०७ ॥

वृषभादित्रिमासेषु ह्यथवा मकरे[7]ऽपि च ।
सोमवारे भवेन्मृत्युरुषःकाले न संशयः ॥ १५०८ ॥

मतङ्गांशे व्यये पापे दुर्गतिर्नात्र संशयः ।
पश्चान्निकृष्ट[8]जन्मा च वार्धिके पुत्रशोकवान् ॥ १५०९ ॥

अचलांशे स्थिरे लग्ने पूर्वभागे प्रजायते ।
विप्र[9]जन्मा सुखी नित्यं श्यामवर्णकृशाकृतिः ॥ १५१० ॥

---

1. एकपश्चाशे
2. दशासुखम्
3. अपमृत्यु
4. मान्दिंशे प्रजातके
5. जातके
6. दशान्त्यगे
7. मकरेषु च
8. जन्मश्च
9. विप्रजन्मा

ज्येष्ठभ्रातृप्रियः साधुर्बाल्ये क्लेशेन कर्शितः ।
भगिनी[1]भर्तृमूलेन देशान्तरसुभाग्यवान् ॥ १५११ ॥

लग्ने कुजे सिते जीवे [2]ह्यम्बरांशसमुद्भवः ।
पश्चाद्भ्रातृविहीनश्च [3]जातश्चेन्मृतिमादिशेत् ॥ १५१२ ॥

भगिनीद्वयवान् रागी [4]ह्येकभ्रातृसमन्वितः ।
पितृसौख्यविहीनश्च मातृसौख्यविहीनवान् ॥ १५१३ ॥

उत्तरांशे प्रजातस्य [5]पितरौ च चिरायुषौ ।
पूर्वभागे ज्येष्ठ[6]भ्राता दीर्घमायुश्च विन्दति ॥ १५१४ ॥

कुम्भांशे जनने चेति सम्प्रदाये विनिर्दिशेत् ।
पश्चिमार्णव[7]तीरे च गोकर्णप्रान्त्यदेशके[8] ॥ १५१५ ॥

बाल्ये संचारमाप्नोति दारिद्र्येण च कर्शितः ।
उत्तरांशे प्रजात[9]श्च जन्मदेशे सुभाग्यवान् ॥ १५१६ ॥

विप्लवेन विनिर्गत्य पश्चात् स्वस्थानमागतः[10] ।
मेषांशे कुम्भलग्ने च पुण्यक्षेत्रे सुभाग्यवान् ॥ १५१७ ॥

आन्ध्र[11]प्रमोश्च निकटे प्रारब्धं चोत्तरोत्तरम् ।
पूर्वभागे मध्यखण्डे बाल्ये पितृविनाशवान् ॥ १५१८ ॥

[12]आयुष्मती च जननी जातस्य स्वचलांशके ।
लाभे शनिसिते सूर्ये [13]जातस्य स्वचलांशके ॥ १५१९ ॥

---

1. भ्रातृमूलेन
2. अम्बरांश सञ्जातके
3. जायते
4. एकभ्रातृ
5. पितृमातृचिरायुषम्
6. भ्रातृ
7. अर्णवतः प्रान्त्ये
8. देशगे
9. प्रजातस्य
10. आदिशेत्
11. प्रभुद्वारदेशे
12. जननी दीर्घमायुष्यमचलांशस्य जातके
13. अचलांशसञ्जातके

सम्पद्वाये पि[1]तरिष्टं देशत्यागं विनिर्दिशेत् ।
चन्द्रस्मात्पमाधीशदशायां पापभुक्तिषु ॥ १५२० ॥

स्वपितारिष्टमाप्नोति [2]मातरिष्टं ततः परम् ।
अचलांशे मन्दे चन्द्रे कलत्रद्वययोगवान् ॥ १५२१ ॥

केचित्पक्षे [3]त्रिभार्यश्च दारसौख्यविहीनवान् ।
अचलांशे पूर्वभागे दारेशे शनिवीक्षिते ॥ १५२२ ॥

विवाहद्वयमित्याहु ज्येष्ठभार्या [4]ह्यपुत्रिणी ।
अचलांशे पूर्वभागे सुतेशे राहुवीक्षिते ॥ १५२३ ॥

लाभे मन्दे प्रजातश्च[5] सन्तानप्रतिबन्धवान् ।
उत्तरांशे महारोगी ज्येष्ठभार्याथ वापि च ॥ १५२४ ॥

काकवन्ध्यापतिश्चैव पूर्वभागे [6]ह्यपुत्रवान् ।
मन्थान्तरे पूर्वभागे [7]जातस्य त्वचलांशके ॥ १५२५ ॥

कालान्तरे सुतप्राप्तिर्दाराान्तरफलं स्मृतम् ।
लग्नात् पञ्चमगे जीवे पापद्वयनिरीक्षिते ॥ १५२६ ॥

अचलांशे प्रजातश्च पुराब्राह्मणशापवान् ।
तत्शापपरिहारार्थं सेतुस्नानं शिवार्चनम् ॥ १५२७ ॥

[8]नागलिङ्गप्रदानेन सन्तानप्राप्तिमादिशेत् ।
[9]सौवर्णं नागलिङ्गं च सोमवारे प्रदोषके ॥ १५२८ ॥

उपोष्य विधिवत् पूजां सायाह्ने दानमाचरेत् ।
अचलांशे पूर्वभागे लग्ने [10]सूर्ये च संस्थिते ॥ १५२९ ॥

---

1. पिता
2. मातारिष्टं विनिर्दिशेत्
3. त्रिभार्या च
4. अपुत्रिणी
5. प्रजातस्य
6. अपुत्र
7. अचलांशस्य जातके
8. नागेश्वर प्रसादेन
9. फलमेकं तदर्धेन
10. सूर्यः प्रजायते

मातुलतादिपुण्येन पुत्रप्राप्तिर्न संशयः ।
ज्येष्ठभ्रातृसुताधीशे नीचांशे कुजवीक्षिते ॥ १५३० ॥

ज्येष्ठभ्रातृ[1]सुतश्चाविजले मृतिमवाप्नुयात् ।
अचलांशे पूर्वभागे भगिनीपुत्रयोगवान् ॥ १५३१ ॥

स्वमातुलवशात् सौख्यमावाप्य प्रियवान् सुखी ।
उत्तरांशे प्रजातस्य [2]भगिन्यौ द्वे सुपुत्रिके ॥ १५३२ ॥

पूर्वभागे तथा विन्द्याद्वैकल्येन तु कर्शिता ।
निर्मलांशे विक्रमेशे [3]जातस्यात्वमलांशके ॥ १५३३ ॥

सोदराः पञ्च सप्तेति द्वित्रिसङ्ख्याचिरायुषी[4] ।
उत्तरांशे स्वभगिनी [5]त्वेका माङ्गल्यमश्नुते ॥ १५३४ ॥

पूर्वभागे च वैधव्यं सोदर्यौ[6] द्वे न संशयः ।
चन्द्रात् सप्तमगे शुक्रे [7]त्वसितेन निरीक्षिते ॥ १५३५ ॥

अचलांशे प्रजातस्य [8]मात्ररिष्टं विनिर्दिशेत् ।
तुलाधिपदशाकाले [9]होरादायेऽपि वा यदि ॥ १५३६ ॥

[10]पित्ररिष्टात् परं माता परलोकं प्रयास्यति ।
पूर्वभागे मध्यखण्डे [11]मात्ररिष्टात् परं पिता ॥ १५३७ ॥

सम्पदाये मृतश्च[12] स्याद्द्वात्रर्पान् परं भवेत् ।
अष्टमाब्दे द्वादशाब्दे [13]ह्यथ वा षोडशाब्दके ॥ १५३८ ॥

चतुर्विंशेऽथ वा चेति मातापितृविनाशनम् ।
वर्गोत्तमे निशानाथे [14]जातस्य त्वचलांशके ॥ १५३९ ॥

---

1. सुतारिष्टं जलगण्डं विनिर्दिशेत्
2. भगिनी द्वौ सुपुत्रिणी
3. अचलांशस्य जातके
4. चिरायुषम्
5. एका
6. सोदरी द्वौ
7. असितेन
8. माता
9. हरेत् पादोऽपि
10. पिता
11. माता
12. जेति
13. अथवा षोडशाब्दे
14. अचलांशस्य जातके

सम्पद्वाये पि[1]त्ररिष्टं देशत्यागं विनिर्दिशेत् ।
चन्द्रलग्नाष्टमाधीशदशायां पापभुक्तिषु ॥ १५२० ॥

स्वपितारिष्टमाप्नोति [2]मात्ररिष्टं ततः परम् ।
अचलांशे मदे चन्द्रे कलत्रद्वययोगवान् ॥ १५२१ ॥

केचित्पक्षे [3]त्रिभार्यश्च दारसौख्यविहीनवान् ।
अचलांशे पूर्वभागे दारेशे शनिवीक्षिते ॥ १५२२ ॥

विवाहद्वयमित्याहु ज्येष्ठभार्या [4]ह्यपुत्रिणी ।
अचलांशे पूर्वभागे सुतेशे राहुवीक्षिते ॥ १५२३ ॥

लाभे मन्दे प्रजातश्च[5] सन्तानप्रतिबन्धवान् ।
उत्तरांशे महारोगी ज्येष्ठभार्याथ वापि च ॥ १५२४ ॥

काकवन्ध्यापतिश्चैव पूर्वभागे [6]ह्यपुत्रवान् ।
ग्रन्थान्तरे पूर्वभागे [7]जातस्य स्वचलांशके ॥ १५२५ ॥

कालान्तरे सुतप्राप्तिर्दोषान्तरफलं स्मृतम् ।
स्मात् पञ्चमगे जीवे पापद्वयनिरीक्षिते ॥ १५२६ ॥

अचलांशे प्रजातश्च पुराब्राह्मणशापवान् ।
तच्छापपरिहारार्थं सेतुस्नानं शिवार्चनम् ॥ १५२७ ॥

[8]नागलिङ्गप्रदानेन सन्तानप्राप्तिमादिशेत् ।
[9]सौवर्णं नागलिङ्गं च सोमवारे प्रदोषके ॥ १५२८ ॥

उपोष्य विधिवत् पूजां सायाह्ने दानमाचरेत् ।
अचलांशे पूर्वभागे लाभे [10]सूर्ये च संस्थिते ॥ १५२९ ॥

---

1. पिता
2. मात्रारिष्टं विनिर्दिशेत्
3. त्रिभार्या च
4. अपुत्रिणी
5. प्रजातस्य
6. अपुत्र
7. अचलांशस्य जातके
8. नागेश्वर प्रसादेन
9. फलमेक तदर्थेन
10. सूर्यः प्रजायते

मानुव्रतादिपुण्येन पुत्रप्राप्तिर्न संशयः ।
ज्येष्ठभ्रातृसुताधीशे नीचांशे कुजवीक्षिते ॥ १५२० ॥

ज्येष्ठभ्रातृ[1]सुतश्चापिजले मृतिमवाप्नुयात् ।
अचलांशे पूर्वभागे भगिनीपुत्रयोगवान् ॥ १५२१ ॥

स्वमातुलवशात् सौख्यमावाश्ये प्रियवान् सुखी ।
उवरांशे प्रजातस्य [2]भगिन्यौ द्वे सुपुत्रिके ॥ १५२२ ॥

पूर्वभागे तथा विन्द्याद्वैधव्येन तु कर्शिता ।
निर्मलांशे विक्रमेशे [3]जातस्यत्वमलांशके ॥ १५२३ ॥

सोदराः पञ्च सप्तेति द्वित्रिसङ्ख्याचिरायुषी[4] ।
उवरांशे स्वभगिनी [5]त्वेका माङ्गल्यमश्नुते ॥ १५२४ ॥

पूर्वभागे च वैधव्यं सोदर्यौ[6] द्वे न संशयः ।
चन्द्रात् सप्तमगे शुक्रे [7]त्वसितेन निरीक्षिते ॥ १५२५ ॥

अचलांशे प्रजातस्य [8]मात्ररिष्टं विनिर्दिशेत् ।
तुलाधिपदशाकाले [9]ह्योरादायेऽपि वा यदि ॥ १५२६ ॥

[10]पित्ररिष्टात् परं माता परलोकं प्रयास्यति ।
पूर्वभागे मध्यखण्डे [11]मात्ररिष्टात् परं पिता ॥ १५२७ ॥

सम्पद्दाये मृतश्च[12] स्याद्दशवर्षात् परं भवेत् ।
अष्टमाब्दे द्वादशाब्दे [13]ह्यथ वा षोडशाब्दके ॥ १५२८ ॥

चतुर्विंशेऽथ वा चेति मातापितृविनाशनम् ।
वर्गोत्तमे निशानाथे [14]जातस्य त्वचलांशके ॥ १५२९ ॥

---

1. सुतारिष्टं जलगण्डं विनिर्दिशेत्
2. भगिनी द्वौ सुपुत्रिणी
3. अचलांशस्य जातके
4. चिरायुषम्
5. एका
6. सोदरी द्वौ
7. असितेन
8. माता
9. हरेत् पातोऽपि
10. पिता
11. माता
12. जेति
13. अथवा षोडशाब्दे
14. अचलांशस्य जातके

उच्चांशे विपद्दाये संधिकाले [1]ह्यरिष्टकृत् ।
जन्मदेशं परित्यज्य पूर्व[2]भागोद्भवस्य च ॥ १५४० ॥

देशान्तरे [3]मातृपित्रोररिष्टं मनुरब्रवीत् ।
महाशनाडीविस्तारे[4]प्रस्ताराष्टकवर्गके ।
अचलांशे प्रजातस्य फलमन्यद्विचार्यताम् ॥ १५४१ ॥

स्वोच्चांशगे निशानाथे निर्मलांशे [5]च संस्थिते ।
वेदान्त[6]शास्त्रतत्त्वज्ञः सदा[7]ह्याह्निककर्मवान् ॥ १५४२ ॥

अतिभक्तिरतो नित्यं निर्मलांशे निशाकरे ।
सात्त्विको गुणवान् रागी हरिशङ्करभक्तिमान् ॥ १५४३ ॥

विप्लवेन विनिर्गत्य दशवर्षात् परं [8]मृतिम् ।
द्वादशाब्दात् परं [9]श्रुत्वा नानादेशेषु संचरन् ॥ १५४४ ॥

पितृमातृविनाशेन क्लेशं प्राप्नोति भूरिशः ।

महानदीतीरपुरे निवासे
योगं वदेद्देवचलांश[10]जस्य ।
अतीव सौख्यं मुनयो वदन्ति
विपद्दशान्त्यादि[11] सुभाग्यवृ[12]द्धिम् ॥ १५४५ ॥

क्षेमदाये महद्भाग्यं चत्वारिंशे महाविपत् ।
त्रिंशोपरि सुभाग्याप्ति[13] राजान्तरवशात् सुखम् ॥ १५४६ ॥

राज्येशांशे तत्त्रिकोणे तत्सप्तमे[14]ऽथ गोचरे ।
योगभङ्गं मनस्तापं शनि[15]चारवशात् फलम् ॥ १५४७ ॥

---

1. अरिष्टकृत्
2. भागस्य जातके
3. पिता माता
4. विस्तारं
5. निशाकरे
6. ज्ञान
7. आह्निक
8. विपत्
9. चेति
10. जातः
11. दशान्त्यादि
12. वृद्धिः
13. भाग्याप्तिः
14. मथापि वा
15. शनिवार

षष्ठेशांशत्रिकोणस्थे स्फुटयोग गते शनौ ।
अतीव क्लेशकार्याणि देशत्यागं विनिर्दिशेत् ॥ १५४८ ॥

लग्नाधिपदशाकाले [1]त्वतीव प्रियमश्नुते ।
[2]द्यूनाधिपदशा मृत्युरापरसन्यासयोगवान् ॥ १५४९ ॥

—: * :—

## तुलालग्ने अगदांशः ॥

अगदांशकगे जीवे लाभेऽर्के भृगु संयुते ।
तुलालग्ने प्रजातश्च [3]गौरवर्णः शुभाकृतिः ॥ १५५० ॥

जगत्यंशे पूर्वभागे [4]स्वगदांशकगे गुरौ ।
भृगुजेन युते दृष्टे सोदरभ्रातृमात्रिमान् ॥ १५५१ ॥

ज्येष्ठभ्रातृयुतो मानी [5]जीवमातृयुतः सुखी ।
सुतप्रजाबहुत्वं स्याद्राजवंशे शुभाग्यवान् ॥ १५५२ ॥

अगदांशकगे जीवे लाभे द्विमदसंयुते ।
कनिष्ठभ्रातृमान् रागी ज्येष्ठभ्राता[6] द्विभार्यवान् ॥ १५५३ ॥

सिंहे सिंहांशके[7] जीवे शास्त्रविद्याविशारदः ।
श्रीमान् वाग्मी सुखी योगी धर्मिष्ठः सात्त्विकप्रियः ॥ १५५४ ॥

जगत्यंशे पूर्वभागे [8]जातस्य तौलिलग्नके ।
इदमेव फलं सत्यं [9]जातस्य स्वगदांशके ॥ १५५५ ॥

सिंहे सिंहांशके[10] जीवे मीनकाले प्रजायते ।
विष्णुभक्तिरतो नित्यं देवब्राह्मणभक्तिमान् ॥ १५५६ ॥

---

1. अतीव
2. द्यूनाधिप
3. प्रजातस्य
4. अकदांशक
5. मातृदीर्घायुमान्
6. भ्रातृ
7. सिंहांशगे
8. तुलालग्नस्य जातके
9. सप्तमगदांशस्य जातके
10. सिंहांशगे

सिंहे जीवे मीनकाले वैदिकाचारवान् सुखी ।
अवैदिकमताचारं शनियोगे प्रजायते ॥ १५५७ ॥
ग्रन्थान्तरे नारदीये [1]अगदांशसमुद्भवः ।
हरिभक्तिरतो नित्यं मीनकाले शुभाग्यवान् ॥ १५५८ ॥
चन्द्रकालाधिपे शुक्रे सूर्यकालाधिपे गुरौ ।
अन्योन्य[2]दृष्टियोगेन लाभे भाग्य[3]प्रदौ च तौ ॥ १५५९ ॥
चन्द्रकालाधिपे शुक्रे लाभेशेन समन्विते ।
स्वजातिधर्मतत्त्वज्ञो मतभेदे[4] कुयुक्तिमान् ॥ १५६० ॥
[5]शुक्रे शनियुते जातः क्रोधी[6] लुब्धो विचक्षणः ।
स्त्रीलोलश्चपल. श्रीमान् तामसः सत्यविक्रमः ॥ १५६१ ॥
श्रीमान् मनोहराङ्गश्च [7]स्वगदांशे सुबुद्धिमान् ।
लिपित्रयप्रवीणश्च [8]ह्यरोगदृढगात्रवान् ॥ १५६२ ॥
लाभेशांशपतौ शुक्रे रविजेन युतेक्षिते ।
अगत्यंशे प्रजातश्च रत्नान्वेषी सुबुद्धिमान् ॥ १५६३ ॥
सिंहे वर्गोत्तमे जीवे मेषारूढेऽल्पपुत्रवान् ।
मृतप्रजाबहुत्वं स्याच्छुकार्कियुतवीक्षिते ॥ १५६४ ॥
जीवे शनियुते जातः शान्तः शास्त्रार्थकोविदः ।
स्वतन्त्रः परकार्यज्ञश्चपलश्चञ्चलात्मवान् ॥ १५६५ ॥
विदेशवासी मतिमान् पुत्रशोकेन कर्शितः ।
नजरांशकगे सूर्ये मीने[9]काले सुभाग्यवान् ॥ १५६६ ॥
मीनांशे नवमे सूर्ये स्वपिता भ्रातृहीनवान् ।
कालान्तरे भ्रातृशोकमल्पायुर्युतः सुखी ॥ १५६७ ॥

---

1. अगदांशस्य जातके
2. शुभकार्येण
3. प्रदः सुखी
4. मतभेदः
5. शुक्रः शनियुतो
6. क्रोधी
7. अगदांशे
8. अरोग
9. मीने

सूर्ये [1]यावत्फलानि स्युर्महुमुक्तांशकैस्तथा ।
[2]तावत् पितुः सोदराणां सङ्ख्यानि परिचिन्तयेत् ॥ १५६८ ॥
धनपुत्रमित्र[3]तुर्ये द्विजदेवार्चने तथा ।
[4]द्वेषी पितॄणां नवमे तपने सति कृष्णः स्यात् ॥ १५६९ ॥
सुन्दरः सुखवान् रागी सत्कलत्रप्रियः सुखी ।
भाग्ये बुधयुते सूर्ये मेधावीकुजसंयुते ॥ १५७० ॥
भाग्ये राहौ प्रसन्ने[5] च तदीशेन समन्विते ।
पितृमातृविहीनश्च प्रतिबन्ध[6]कसंयुतः ॥ १५७१ ॥
[7]पितुरिष्टस्य काले वा मा[8]त्ररिष्टेऽथ वा यदि ।
देशान्तरे निवासश्च ग्राथ ग्रामान्त[9]रेऽपि वा ॥ १५७२ ॥
वनान्तरपुरे वासी[10] नवमे राहु[11]संस्थिते ।
नदीप्रान्त्येऽथ वा चेति लोचांशे भाग्यवान् सुधीः ॥ १५७३ ॥
स्वभार्यासोद[12]राणां च बहूनां नाशमीरयेत् ।
[13]दुःखिता दारमाता च पुत्रशोकेन कर्शिता ॥ १५७४ ॥
जगत्यंशे पूर्वभागे श्वश्रश्वशुरभक्तिमान् ।
दारवे[14]शात सुभाग्यात्विरुद्वाहान्तर सुखम् ॥ १५७५ ॥
मध्यायुर्योगवान् वाग्मी तेजस्वी गुरुभक्तिमान् ।
लाभे भृगुयुते जीवे [15]भगदांशे धनी सुखी ।
शनियोगे प्रजात[16]श्च मृतपुत्रबहुत्ववान् ॥ १५७६ ॥

---

1. फलं सन्ति भंशराशिश्च वा यदि
2. स्वपिता सोदरश्चैव
3. वाग्मी द्विजदेवतापूजनेऽतिभक्तश्च
4. पितृमातृद्वेषी नवमे तपनेऽति
5. राहुप्रसन्नश्च
6. प्रपीडवान्
7. पिता
8. माता
9. ग्रामान्तरमथापि वा
10. वासं
11. राहुआतके
12. सोदरभ्रातृबहुत्वं
13. स्वदारजननी दुःखी
14. दारवंशे
15. भगदांशे
16. प्रजातस्य

अदृष्टयत्नमूलेन पुत्रायुर्वृद्धिमादिशेत् ।
अगदांशकगे जीवे पितृसौख्यविहीनवान् ॥ १५७७ ॥

[1]स्वमात्रा सह संयुक्तो भ्रातृसौख्यसमन्वितः ।
भ्रातृद्वयसुपूज्यश्च भगिन्येका सुमङ्गली ॥ १५७८ ॥

एका क्लेशवती चेति सोदरभ्रातृभ्रातिमान् ।
भ्रातृसौख्यसमायुक्तः पुत्रशोकेन कर्शितः ॥ १५७९ ॥

भ्रातृश्रेष्ठः सुखी नित्यं पुत्रभाग्याभिवृद्धिमान् ।
सन्तानारिष्टदोषार्थमगदां[2]शोद्भवस्य च ॥ १५८० ॥

शिशुमारप्रदानेन पुत्रायुश्च [3]प्रवर्धने ।
सुतेशांशकगे चन्द्रे भूसुतेन निरीक्षिते ॥ १५८१ ॥

त्रिधाग्निना सुतारिष्टं तदभावे जलेन[4] च ।
तद्दोषपरिहारार्थं चन्द्र[5]शान्तिं समाचरेत् ॥ १५८२ ॥

उमामहेश्वरं [6]कृत्वा कश्यपोक्तविधिमार्गतः ।
उमापतिं महादेवं ध्यात्वा चन्द्रकलाधरम् ॥ १५८३ ॥

काल[7]ज्ञाय प्रदातव्यं पुत्रभाग्याभिवृ[8]द्धये ।
चन्द्रलग्नाष्टमे मन्दे गुरुशुक्रसमन्विते ॥ १५८४ ॥

पुराब्राह्मणशापेन सन्तानारिष्ट[9]सम्भवः ।
तद्दोषपरिहारार्थं सेतुस्नानमवश्यकम् ॥ १५८५ ॥

[10]सौवर्णनागदानं च प्रतिष्ठाजपसंयुतम् ।
[11]आयुष्मन्तं च तनयं लभते स्वगदांशजः ॥ १५८६ ॥

---

1. स्वमातृसुखसमायुक्तः
2. अगदांशस्य जातके
3. विवर्धनः
4. जलेषु च
5. प्रार्थनमादित्
6. दानं
7. कालज्ञस्य प्रदानेन
8. वृद्धिकृत्
9. शोकवान्
10. स्वर्णनागेश्वरं दानं प्रतिष्ठादिमतं चरेत्
11 पश्चात् सन्तानमायुष्यं भमदां शस्य जातके ।

[1]द्वौ पुत्री कन्यकाप्येका दीर्घमायुश्च विन्दति ।
पराशरमते जीवे [2]स्वगदांशे च संस्थिते ॥ १५८७ ॥

[3]आयुष्मन्तौ च पुत्रौ द्वौ शेषं नाशमितीरयेत् ।
[4]चन्द्रलग्नाष्टमे मन्दे लग्नादेकादशेऽपि च ॥ १५८८ ॥

मृतप्रजारिष्टशान्तिं कारयेद्विधिवत् क्रमात् ।
तदभावे गार्ग्य[5]मते जातो जातो मृतो भवेत् ॥ १५८९ ॥

शान्तिकर्म[6]कृते चैव ह्यायुष्मान् जायते सुतः ।
यद्भावस्याष्टमे मन्दे [7]यद्भावस्य त्रिकोणके ॥ १५९० ॥

[8]तत्तद्भावस्य क्लेशश्च तत्तत्काले भविष्यति ।
लग्नाद्वा चन्द्रलग्नाद्वा योजयेत् कालवित्तमः ॥ १५९१ ॥

गोचरेण फलं [9]योज्यं दशाभुक्तिविधानतः ।

दारेशसंबन्धदशाविपाके
लग्नेशसंबन्धदशान्तरे वा ।
भाग्यभिवृद्धिश्रियमाकरोति
कलत्रलाभं प्रवदन्ति सन्तः ॥ १५९२ ॥

भगदांशकगे जीवे विपद्दाये स्वभुक्तिषु ।
जीवान्तरेऽथ वा चेति विवाहोत्सवमादिशेत् ॥ १५९३ ॥

सम्पद्दाये सप्तमाब्दे मौञ्जीबन्धनमादिशेत् ।
पश्चाज्ज्वर[10]भयेनैव दशासन्धौ प्रपीडितः ॥ १५९४ ॥

बाल्ये [11]मान्द्यज्वरभयं क्षिप्रेणारोग्यमादिशेत् ।
पूर्वाब्दके ततः पश्चान्मसूरीज्वर[12]तापितः ॥ १५०.५ ॥

---

1. द्विसुतः कन्यकाप्यस्य
2. भगदांशस्य जातके
3. सन्तानद्वयमायुष्यं
4. चन्द्रलग्नाष्टमे
5. होरे जातं जातं मृतप्रजा
6. सुपुत्रासिदीर्घमायुश्च विन्दति
7. तद्भावस्याष्टमे स्थिते
8. तद्भावक्लेशमाप्नोति तत्काले च भविष्यति
9. सर्वं
10. ज्वरभयं गण्डं
11. मान्द्यज्वरभयं
12. ज्वरगण्डवान्

जननीव्याकुलं चेति मातृवंशेऽप्यरिष्ट[1]जम् ।
पितृव्यजनसन्तापं सम्पद्दाये शुभाशुभम् ॥ १५९६ ॥

स्वमातृसोदरा[2]णां च क्लेशो भवति भूरिशः ।
[3]ज्येष्ठभ्रातुर्विवाहश्च सम्पद्दारदशान्त्यके ॥ १५९७ ॥

विपद्दाये जातकस्य द्वादशाब्दात् परं शुभम् ।
अगदांशकगे जीवे षोडशाब्दे विवाहवान् ॥ १५९८ ॥

मनुवर्षेऽथवा चेति [4]ह्येकोनविंशवत्सरे ।
विद्यालाभं ततः पश्चाच्छास्त्राभ्यास[5]रतः सुखी ॥ १५९९ ॥

[6]दारवंशादासभाग्यो विपद्दाये श्रिया [7]युतः ।
[8]भाग्यराहुदशाकाले भाग्येशांशत्रिकोणके[9] ॥ १६०० ॥

स्फुटयोगं गते मन्दे [10]पित्ररिष्टं विनिर्दिशेत् ।
स्वमाता विधवाभूत्वा चिरकालं सुजीवति ॥ १६०१ ॥

विपद्दाये दारवंशे भाग्यवृद्धिवशात् सुखम् ।
श्वशुराधिपतौ जीवे सिंहे वर्गोत्तमांशके[11] ॥ १६०२ ॥

अगदांशे प्रजातस्य श्वशुरश्च त्रिभार्यकः[12]
स्वदारवंशभाव[13]स्यात् कीर्तिभोगयुत. सुखी ॥ १६०३ ॥

तृतीयाब्दे [14]ह्यनावृष्टिर्लोके दुर्भिक्षजं भयम् ।
पञ्चविंशे चतुर्त्रिंशे सप्तविंशे [15]च वत्सरे ॥ १६०४ ॥

---

1. अरिष्टकृत्
2. सोदरादीनि क्लेशं प्राप्नोति
3. स्वज्येष्ठ भ्रातुरुद्वाहं
4. एकोनाब्देऽथ वा यदि
5. प्रदः
6. दारवंशे सुभाग्याप्तिः
7. श्रियावहम्
8. भाग्ये
9. त्रिकोणगे
10. पितारिष्टं
11. वर्गोत्तमांशगे
12. भार्यवान्
13. प्राबल्यकीर्ति
14. अनावृष्टिर्लोके दुर्भिक्षडाबरम्
15. सप्तविंशेति

[1]राहुयुक्तार्किदोषेण लोके दुर्भिक्षमादिशेत् ।
भगदांशकगे जीवे स्थिरराशिचतुष्टये ॥ १६०५ ॥
स्फुटयोगं गते मन्दे राज्याधिपतिनाशनम् ।
अष्टमाब्दे जन्मदेशे मण्डलाधिपतेर्विपत् ॥ १६०६ ॥
स्त्रीराज्यकाले भाग्यातिदारवंशे [2]प्रिया युतः ।
लाभेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ॥ १६०७ ॥
लाभेशदृष्टिराशौ तु जननी व्याकुलं महत् ।
दारवंशे मनस्तापे योगभङ्गे शुभाशुभम् ॥ १६०८ ॥
साधनान्त्यात् परे चेति दारवंशेऽ[4]प्यरिष्टजम् ।
धनेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ॥ १६०९ ॥
धनेशदृष्टिराशौ तु दारवंशजनाशधि ।
तदभावे कलत्रस्य देहजाड्यवशाद्व्यथा ॥ १६१० ॥
सन्तानक्लेशमाप्नोति श्वशुरादिप्रपीड[5]कम् ।
भाग्यराहुदशाकाले कर्माधिपतिभुक्तिषु ॥ १६११ ॥
धनाधिपान्तरे चापि धनलाभं विनिर्दिशेत् ।
भाग्यराहुदशाकाले रन्ध्राधिपतिभुक्तिषु ॥ १६१२ ॥
देशत्यागं मनस्तापे योगभङ्गे शुभाशुभम् ।
चन्द्रान्तरे ततः पश्चात् स्वस्थानप्राप्तिमादिशेत् ॥ १६१३ ॥
कुजान्तरे योगभङ्गे स्थानच्युतिवशाद्व्य[6]थाम् ।
षड्विंशाब्दात् परं [7]भाग्ये लक्ष्मीयोगं द्विवत्सरम् ॥ १६१४ ॥
विशेषकाभूवाप्ति[8] पुत्रलाभं विनिर्दिशेत् ।
भाग्ये भाग्यांश[9]के राहौ दशान्त्ये बहुलाभवान् ॥ १६१५ ॥

1. लाभांशुशानि
2. धियायहम्
3. साधनाब्दात्
4. ऽरिष्टकृत्
5. प्रपीडकृत्
6. वशाद्व्यथा
7. योगं
8. भूप्राप्तिः
9. अंशगे राहु

दशामध्ये मनस्तापं दशादौ शुभमादिशेत् ।
सर्वदाये शुक्रभुक्तौ सर्वभुक्तौ स्व वा यदि ॥ १६१६ ॥

अगदांशे प्रजातस्य स्वजनारिष्टमादिशेत् ।
स्वर्क्षे वर्गोत्तमे.स्वांशे शुभांशे[1] वा दशान्त्यके ॥ १६१७ ॥

अतीव क्लेशमाप्नोति दशासंघौ न दोषभाक् ।
अगदांशे विपद्दाये संधिकाले शुभावहम् ॥ १६१८ ॥

ग्रामान्तरादिसंचारं धनलाभं विनिर्दिशेत् ।
लग्नेशांशे तत्त्रिकोणे स्फुटयोगं गते गुरौ ॥ १६१९ ॥

लग्नेशदृष्टिराशौ तु सोदरोत्पत्तिमादिशेत् ।
भाग्येशांशे तथा विन्यालाभेशांशे तथैव च ॥ १६२० ॥

स्फुटयोगं गते जीवे भ्रातृलाभ इति स्मृतम् ।
भाग्येशांशे तत्त्रिकोणे [2]स्वक्षेत्रांश त्रिकोणके ॥ १६२१ ॥

स्फुटयोगं गते जीवे सन्तानोत्पत्तिमादिशेत् ।
मेलापगांशगे चन्द्रे [3]द्वेकोनत्रिंशवत्सरे ॥ १६२२ ॥

योगभङ्गं मनस्तापं स्वस्थानच्युतिमादिशेत् ।
अष्टांशे सुभाग्याद्वि[4] लक्ष्मीयोगवशात् सुखम् ॥ १६२३ ॥

ततः पश्चात् क्लेशकारुं पश्चाद्विपत्तिदायके[5] ।
षष्ठेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ॥ १६२४ ॥

षष्ठेशदृष्टिराशौ तु ज्येष्ठभ्रातृमनोव्यथा ।
स्वज्येष्ठभ्रातृभार्या[6]देरिष्टमिति चादिशेत् ॥ १६२५ ॥

क्षिप्रेण द्वाहतः पश्चात् संचितद्रविणव्ययम् ।
विक्रमेशदशाकाले [7]जातस्य स्वगदांशके ॥ १६२६ ॥

1. शुभांशस्य दशान्त्यगे
2. स्वदेशांशत्रिकोणगे
3. एकोन
4. भाग्याप्तिः
5. दायगे
6. भार्यादि अरिष्ट
7. अगदांशस्यजातके

धनान्तरपुरे मासे खेदमोदे शुभावहम् ।
व्ययाधिपान्तरे काले लोके दुर्भिक्षजं[1] भयम् ॥ १६३८ ॥

प्रजाक्षोभं प्रकुर्वीत बन्धुवर्गे विशेषतः ।
शनिद्वितीयपर्याये गोचरे स्वोच्चराशिगे ॥ १६३९ ॥

बुधान्तरे तृतीयांशे स्वस्थानप्राप्तिमान् सुखी ।
नीचांशके भाग्यदाये [2]रन्ध्राधिपतिदायके ॥ १६४० ॥

भाग्याधिपान्तरे काले नीचभङ्गे महत् सुखम् ।
तुलाशनौ मातृवर्गे पितृवर्गेऽथ वा यदि ॥ १६४१ ॥

क्रूरमासे मनस्तापं क्षेमदाये फलं स्मृतम् ।
सप्तमाधिपतौ भौमे मन्दांशे बुधसंयुते ॥ १६४२ ॥

स्वभ्रातृकन्यकोद्वाहं श्वशुर[3]श्चाप्यपुत्रवान् ।
ग्रन्थान्तरे गर्ग[4]मते केचित्पश्चैकपुत्रवान् ॥ १६४३ ॥

श्वशुरस्य फलं सत्यं दीर्घमायुश्च विन्दति ।
भौमांशके[5] तत्त्रिकोणे स्फुटयोगं गते शनौ ॥ १६४४ ॥

क्लेशं चाप्नारके देशे प्रजाक्षोभं विनिर्दिशेत् ।
मण्डलाधिपतेर्मृत्युः तुलान्त्ये वृश्चिके शनौ ॥ १६४५ ॥

मेषान्ते वृषभे वापि कुलीरान्ते च सिंहगे ।
मीनत्रिकोणगे मन्दे सेनामात्यनृपावधि ॥ १६४६ ॥

पाण्ड्यदेशे प्रशस्तं स्याच्चोलभूपतिनाशनम् ।
राज्यस्थानं पञ्चमं स्यात् प्रभुस्थानं चतुष्टयम् ॥ १६४७ ॥

अथवा नवमं चेति योजयेत् कालवित्तमः ।
राज्यस्थानं[6] समारभ्य रन्ध्राधिपतिभुक्तिषु ॥ १६४८ ॥

---

1. द्वापरम्
2. अष्टाधिपतिदायगे
3. स्य अपुत्रवान्
4. होरे
5. भौमाश्रगे
6. स्थानमारभ्य

चतुस्त्रिंशाब्दमारस्य पञ्चत्रिंशतिवत्सरे ।
अगदांशे प्रजातश्च[1] स्वस्थाने बहुभाग्यवान् ॥ १६५९ ॥

केत्वन्तरे शुभं नित्यं क्रूरमासे विनाशुभम् ।
स्वदारवं[2]शाद्भाग्याप्तिं बुधभुक्तौ समादिशेत् ॥ १६६० ॥

शुक्रान्तरे क्रूरमासे मातृपीडां मनोव्य[3]थाम् ।
शुभमासे धनप्राप्तिं[4]सन्तानोत्पत्तिनाशनम् ॥ १६६१ ॥

अगदांशे क्षेमदाये पञ्चत्रिंशतिवत्सरे ।
नागयोगदशाभाग्यं क्षेमदाये न संशयः ॥ १६६२ ॥

कर्मेशांशे वत्रिकोणे स्फुटयोगं गते शनौ ।
श्वशुरस्य मपीडादि तद्वर्गे वा [5]ह्युपद्रवः ॥ १६६३ ॥

विक्रमेशदशान्त्यादौ[6] सुखाधिपतिदायके ।
स्वभुक्तौ श्वशुरादिप्रेमपदां[7]शोद्भवस्य च ॥ १६६४ ॥

सुखाधिपदशाकाले लाभेशांशत्रिकोणगे ।
स्फुटयोगं गते मन्दे मातुर्मरणमादिशेत् ॥ १६६५ ॥

लाभे लग्ने प्रजातस्य षष्ठाधिपतिदायगे ।
क्रूरान्तरे भ्रातृशोकं दशासंधौ च वा यदि ॥ १६६६ ॥

एकोनचत्वारिंशाब्दे [8]वटोश्च मौञ्जिबन्धनम् ।
अगदांशे ततः पश्चात् स्वपुत्रोद्वाहसंभ्रमम् ॥ १६६७ ॥

प्रत्यग्दाये शुभं नित्यं गेहे गोधान्यमङ्गलम् ।
पुत्रिकोद्वाहसौख्याप्तिं[9] भ्रातृद्वेषं विनिर्दिशेत् ॥ १६६८ ॥

---

1. प्रजातस्य
2. वंशे भाग्याप्तिः
3. मनोव्यथा
4. धनप्राप्तिः
5. उपद्रवः
6. दशान्त्यादि
7. अशस्य जातके
8. व्रतोपनयनं स्मृतम्
9. सौख्याप्तिः

लाभे जीवे नागयोगे तुलालग्ने[1] च जायते ।
वार्धके पुत्रमूलेन बहुसौख्य[2]युतो भवेत् ॥ १६६९ ॥
उद्वाहानन्तरं भार्यं यावज्जीवं च सौख्यवान् ।
[3]आयुष्मन्तौ च द्वौ पुत्रौ धनिकः कीर्तिमान् सुखी ॥ १६७० ॥
[4]चन्द्राधिपदशायां तु पापभुक्तिर्यदा भवेत् ।
दशान्ते वा [5]मृतिं दद्यात् कुलीरादित्रिमासके[6] ॥ १६७१ ॥
चतुष्पष्टिसमे मृत्युर्देहान्ते पुण्यलोकवान् ।
अगदांशफलं सत्यं प्रत्यक्षं देवकेरलम् ॥ १६७२ ॥

—: * :—

## तुलालग्ने मोहनांशः.

जन्मलग्नाधिपे शुक्रे दशमे मोहनांशके[7] ।
भाग्याधिपेन संयुक्ते भाग्यवंशे प्रसूतिमान् ॥ १६७३ ॥
सत्त्ववान् सत्यवादी च रूपिलाकृतिदेहवान् ।
याच[8]केषु प्रसन्नात्मा त्यागभोगवदान्यवान् ॥ १६७४ ॥
मोहनांशकगे शुक्रे परदाररतिप्रिय. ।
बहुस्त्रीसङ्गवान् कामी वीणागानप्रियः सुखी ॥ १६७५ ॥
वृश्चिकांशे विलग्नेशे पापद्वयसमन्विते ।
मेहप्रकृतिदेहः स्याद्राजसप्रकृतिः सदा ॥ १६७६ ॥
मुद्गरांशे पूर्वभागे लग्नेशे मोहनांशके[9] ।
पश्चाद्भ्रातृविहीनः स्याज्ज्येष्ठभ्रातृसमन्वितः ॥ १६७७ ॥

---

1. लग्नस्य जातके
2. प्रदो
3. पुत्रद्वयं चिरायुष्यं
4. चन्द्रलग्नाधिपदशाकालेद्दरेत् पापोऽपि वा यदि
5. मृता चेत्
6. मासगे
7. अंशगे
8. याचकस्य
9. अंशगे

मुद्गरांशकगे शुक्रे भगिन्येका चिरायुषी ।
भ्रातृत्रयसुपुत्रश्च दत्तपुत्र[1]युता शुभा ॥ १६७८ ॥

मुद्गरांशे विष्णुयोगे लग्नेशे मोहनांशके[2] ।
विष्णुभक्तिरतो नित्यं मध्वाचारप्रियः सुखी ॥ १६७९ ॥

लग्नेशांशपतौ भौमे [3]नवांशेशनिरीक्षिते ।
मेहवातज्व[4]रैणैव देहोपद्रववान् सदा ॥ १६८० ॥

भाग्येशांशपतौ जीवे भाग्यस्थे स्वनवांशके[5] ।
मोहनांशे प्रजातस्य[6] स्वपिता बहुभाग्यवान् ॥ १६८१ ॥

मेलापकांशगे सौम्ये मोहनांशकगे गुरौ ।
मुद्गरांशे प्रजातस्य[7] स्वपिता सैनिकेश्वरः ॥ १६८२ ॥

शुक्रे [8]क्षितीश्वरांशस्थे मोहनांशे च नाडिगे ।
तुलालग्ने प्रजातस्य[9] पिता भूपतिना समः ॥ १५८३ ॥

सौराज्यकाले बहुभाग्ययोगे
क्षितीश्वरांशे [10]स्वपितुश्च सौख्यम् ।
पितामहस्य प्रबलं करोति
शुक्रांशकाले फलमाहुरार्याः ॥ १६८४ ॥

जन्मलग्नांशगे शुक्रे भाग्येशांशग्रहेक्षिते ।
भूपालस्नेहवान् भोगी [11]चीनाम्बरसुभूषितः ॥ १६८५ ॥

[12]सर्पतारस्थिते शुक्रे दशमे मोहनांसके[13] ।
लाभाधिपेन संयुक्ते ज्येष्ठभ्रातृद्वयान्वितः ॥ १६८६ ॥

---

1. पुत्रपतिः
2. अशेष
3. स्वनवांश
4. ज्वरादीनि
5. नवांशगे
6. प्रजातश्च
7. प्रजातश्च
8. क्षितीशसंयुक्ते मोहनांशस्य
9. प्रजातश्च
10. स्वपिता सु
11. चीनाम्बरसुभूषितम्
12. मुद्गतारलग्ने
13. मोहनांशगे

गर्भश्रीमान् महाभोगी गौरश्यामतनुर्नरः ।
विशालनयनः कान्तः प्रसन्नवदनः सदा ॥ १६८७ ॥

लम्बाशी धार्मिकः कामी वेश्यास्त्रीसरसः प्रियः ।
नृत्यगीतप्रियो मानी केतुयोगे कुमार्गवान् ॥ १६८८ ॥

वृश्चिकांशकगे शुक्रे कुलीरे केतुसंयुते ।
मोहनांशे प्रजातश्च [1]ह्यन्तःपुरवधूप्रियः ॥ १६८९ ॥

प्रत्यान्तरे राजपत्नीसुभोगप्रियवान् सुधीः ।
निकृष्टकृत्यनृपतिस्नेहवान् स्यान्न संशयः ॥ १६९० ॥

रत्नलाभेन सन्तुष्टो राजा दास्यति वाहनम् ।
शुक्रषष्ठांशयोगेन भूपतिप्रियमोहवान् ॥ १६९१ ॥

सोदराः पञ्चषट्सङ्ख्याश्चतुःसङ्ख्या[2]श्चिरायुषाः ।
लाभाधि[3]पेसुरांशस्थे लग्नेशे मोहनांशके[4] ॥ १६९२ ॥

ज्येष्ठभ्रता प्रसिद्धश्च बहुसेनाश्वनायकः ।
लोभप्रकृतिमान् रागी युद्धे वायुघगण्डवान् ॥ १६९३ ॥

सर्वे[5]भ्रातॄणां प्रथमः स्वपित्रधिककीर्तिमान् ।
बहुयोग [6]इति ख्यातः कलत्रद्वयवान् सुखी । १६९४ ॥

मोहनांशकगे शुक्रे तुलाल[7]ग्नोद्भवस्य च ।
[8]सोदरेषु द्वितीयश्च कलत्रद्वयवान् सुखी ॥ १६९५ ॥

शुक्रे केतु[9]समायुक्ते जातस्य मोहनांशके ।
सहोदरभ्रातृपत्नी [10]सुखिन्यैकान्यकामिनी ॥ १६९६ ॥

---

1. अन्तः
2. चिरायुषम्
3. लाभाधिप
4. अंशगे
5. ज्येष्ठभ्रातृर्योगं स्वपिता
6. योगमिति ख्यातं
7. लग्नस्य जातके
8. सर्वज्येष्ठानुजभ्राता
9. युते जातो मोहनांशस्य जातके
10. कथ ते कन्यकामिनी

सर्वज्येष्ठानुजभ्रातृभार्या गर्भविपीडिता ।
कालान्तरे मृतिं चैति सन्तानोत्पत्तितः परम् ॥ १६९७ ॥
[1]पितृव्यैकोऽधिरायुष्मान् कलत्रत्रयवान् सुखी ।
[2]सर्पहिंसादिदोषेण मृतपुत्रबहुत्ववान् ॥ १६९८ ॥
विक्रमाधिपतौ जीवे हेमांशे भाग्यराशिगे ।
वार्धके स्वपितृव्यश्च[3] पुत्रवांश्चैव संशयः ॥ १६९९ ॥
सप्तमाधिपतौ भौमे मोहनांश[4]समुद्भवः ।
बाल्ये [5]विवाहं लभते रक्तवर्णकलत्रवान् ॥ १७०० ॥
दारेशाक्रान्तभवने दारेशस्य नवांशके[6] ।
स्वदारजन्म[7]लग्नं च योजयेत् कालवित्तमः ॥ १७०१ ॥
मनुषष्ट्यंशगे भौमे तुलाल[8]मोद्भवस्य च ।
स्वदारोद्वाहतः पूर्वं श्वशुरारिष्टमादिशेत् ॥ १७०२ ॥
यमषष्ट्यंशगे मन्दे शोभनांशे[9] च नाडिगे ।
उद्वाहानन्तरं भार्या बहुभाग्यवती [10]शुभा ॥ १७०३ ॥
स्वदार[11]सोदरभ्राता [12]स्त्वेकः स्यादथ वा न च ।
मनुषष्ट्यंशदोषेण स्वदारभ्रातृशोकवान् ॥ १७०४ ॥
मोहनांशे विलग्नेशे दारेशे शोभनांशके ।
भार्या गुणवती पूता[13]त्वेकभ्रातृसमन्विता ॥ १७०५ ॥
कालान्तरे पुत्रवती भर्तृप्रियकरी शुभा ।
[14]शुक्रांशसंस्थिते मन्दे स्वर्भानुकुजवीक्षिते ॥ १७०६ ॥

---

1. पितृव्येकचिरायुष्यं
2. पुरा सा पापस्य दोषो
3. पितृव्यस्य
4. अंशस्य जातके
5. उद्वाहयोग स्यात्
6. नवांशगे
7. भवने
8. लग्नस्य जातके
9. अंशस्य
10. सुखी
11. साभव
12. सोभरएको वा नास्तिमेव च
13. एकभ्रातृ
14. शुक्राहकाल्गे

किंचिद्रोगवती भार्या गर्भस्रावेण कर्शिता ।
तस्य दोषोपशान्त्यर्थं सेतुस्नानं समाचरेत् ॥ १७०७ ॥

पश्चात् [1]सजीवसन्ताने गर्भस्रावो न विद्यते ।
दारारूढपतौ जीवे दारेशे शोभनांशगे ॥ १७०८ ॥

पापदृष्टिविहीने[2] च तस्य भार्या पतिव्रता ।
दारारूढपतौ जीवे मोहनांशकगे भृगौ ॥ १७०९ ॥

दारद्वये सुपुत्राप्तिः स्वपिता [3]त्वेकभार्यवान् ।
सोदरौ द्वौ द्विभार्यो[4] च भगिन्येका [5]स्वपुत्रिणी ॥ १७१० ॥

बहुपुत्रवती चैव माता कश्चित्त्रिभार्यकः[6] ।
पितृव्यश्च[7] तथा विन्द्याद्वार्धके पुत्रयोगवान् ॥ १७११ ॥

पितामहप्रसिद्धश्च राजद्वारे सुपूजितः ।
पुत्रपौत्रैः परि[8]वृतो वार्धके पुत्रशोकवान् ॥ १७१२ ॥

पितामहफलं सर्वं [9]जातस्य मोहनांशके ।
नवमाब्दे [10]पित्ररिष्टं कर्माधिपतिभुक्तिषु ॥ १७१३ ॥

धनाधिपान्तरे वापि स्वमातानुगमिष्यति ।

पितामहभ्रातृसुतामयादि
क्लेशं [11]च दुःखं स्वपितामहस्य[12]।
स्वपुत्रशोकं मुनयो वदन्ति
सम्पद्दशादौ बहुदुःखभाक् स्यात् ॥ १७१४ ॥

सम्पत्ताराधिपे जीवे दशाकालेऽष्टमे स्थिते ।
तद्दशायां मनस्तापं शुभाशुभफलं स्मृतम् ॥ १७१५ ॥

---

1. सन्तानमायुर्व्यं गर्भस्रावं
2. हीनश्च
3. एक
4. भार्यां च
5. काच
6. भार्यवान्
7. पितृव्यस्य
8. वृतैर्वा
9. मोहनांशस्य जातके
10. पिता
11. भवेद्वेत्
12. महच्च

बहुज्ञातिविनाशेन क्लेशं प्राप्नोति भूरिशः ।
षष्ठाधिपदशाकाले राज[1]विग्रहमादिशेत् ॥ १७१६ ॥

स्वज्येष्ठभ्रातृसन्तापं दशारम्भे शुभाग्यवान् ।
पश्चात् क्लेशं[2]युतश्चेति मङ्गयोग[3]युतः सुखी ॥ १७१७ ॥

षष्ठेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ।
षष्ठेशद्विराशौ तु सोदरस्य मनोव्यथा ॥ १७१८ ॥

योगावयोगवांश्चेति तत्तत्काले फलं भवेत् ।
षष्ठेशाकान्तभवने स्फुटयोगं गते भृगौ ॥ १७१९ ॥

षष्ठाधिपदशाकाले स्थाननाशं विनिर्दिशेत् ।
ज्वरोपद्रवपीडादिं स्वदेहायासमेव च ॥ १७२० ॥

भ्रातृद्वेषकलापं [4]च दारपीडां कचित् कचित् ।
गोचरे पञ्चमे मन्दे षष्ठाधिपतिदायके[5] ॥ १७२१ ॥

इदमेव फलं सत्यं चतुर्थे व्याकुलं महत् ।
तत्त्रिकोणे कचिच्चेति कुलीरांशे शुभाधिकम् ॥ १७२२ ॥

महाराजप्रसादेन लभते धनसम्पदः ।
शुक्रे भौमांशयोगेन भाग्येशांशेऽपि दायके[6] ॥ १७२३ ॥

शुक्रभुक्तौ स्त्रिया [7]युक्तो वर्तते स्थानच्युतिर्भवेत् ।
विंशाब्दे [8]शुभदक्लेशं गोचरे द्वादशे गुरौ ॥ १७२४ ॥

एकोनविंशद्वर्षान्ते साष[9]नान्ते विनिर्दिशेत् ।
षष्ठाधिपदशाकाले गोचरे द्विबुके शनौ ॥ १७२५ ॥

---

1. विद्वर
2. भ्रदं चेति
3. भ्रदः
4. स्या दारपीडा
5. दायगे
6. दायगे
7. वातिरन्ते
8. मदति
9. सघनाचो

राज्यान्तरं प्रकुर्वीत राजपत्नी मरिष्यति ।
तत्सप्तमे विपद्याये लाभे वा गोचरे शनौ ॥ १७२६ ॥

सहोदरभ्रातृशोकं जीविते प्रभुनाशनम् ।
तुलाशनौ भाग्यवृद्धि[1] स्वस्थाने राजदर्शनम् ॥ १८२७ ॥

स्वज्येष्ठभ्रातृयोगेन नित्यश्रीसौख्यमादिशेत् ।
कन्याशनिस्थिते काले ऋणप्राप्ति[2] मनोव्यथाम् ॥ १७२८ ॥

ग्रामान्तरे निवासं [3]च पश्चात् [4]स्वस्थानमादिशेत् ।
षष्ठाधिपदशाकाले गोचरे पञ्चमे भृगौ ॥ १७२९ ॥

राहुभुक्तौ धनप्राप्ति[5] स्वल्पलाभं विनिर्दिशेत् ।
दशाधिपेऽष्टमे [6]राहौ लग्नाद्व्ययगते[7] यदि ॥ १७३० ॥

पितृव्यदेहजाड्यादिस्वदेहायासमादिशेत् ।
बन्धुवर्गे शुभं चेति ज्ञातिवर्गे सुतोत्सवम् ॥ १७३१ ॥

राहुभुक्तौ क्रूरमासे ज्वरपीडां विनिर्दिशेत् ।
सप्तमाधिपे जीवे दशायां राहुभुक्तिषु ॥ १७३२ ॥

मोहनांशे प्रजातस्य शुभाशुभफलं समम् ।
विक्रमेशदशाकाले मन्दांशमहभुक्तिषु ॥ १७३३ ॥

अतीव क्लेशकाल. स्याद्भ्रातृपत्नीप्रपी[8]डिता ।
भाग्ये जीवे तुलालग्ने दशायां राहुभुक्तिषु ॥ १७३४ ॥

दशान्ते सोदरभ्रातृसन्तानोत्पत्तिमादिशेत् ।
पितृव्यस्य तथा विन्द्याद्गर्भाधानमथापि च ॥ १७३५ ॥

---

1. वृद्धिः
2. प्राप्तिर्मनोव्यथा
3. स्यात्
4. स्वस्थं विनिर्दिशेत्
5. प्राप्तिरल्प
6. राहुर्लग्ना
7. गतो
8. पीडता

पुण्यतीर्थफलप्राप्तिर्भ्रातृवर्गे विशेषतः ।
कुटिलावस्थगे मन्दे तुलांशे कुजवीक्षिते ॥ १७३६ ॥
अन्तःक्रोधी मलस्तात्मा ज्ञातिबन्धुविरोधवान् ।
वित्ते मन्दे तुलांशे वृश्चिकांश[1]समुद्भवः ॥ १७३७ ॥
कुत्सितप्रियवान् रागी कुमार्गप्रभुसेवकः ।
स्व[2]राज्यनृपतिक्रोधी पापी दुर्मार्ग[3]मानवः ॥ १७३८ ॥
मेहरोगी कृशश्चैव जीवहिंसाप्रदो भवेत् ।
सप्तमोक्त[4]गुणो वाच्यः कुटिलावस्थगे शनौ ॥ १७३९ ॥
कुलमोक्षादिदोषेण भ्रातृभार्यासुतामयम् ।
मन्दे कुलमपष्ठ्यंशे पापद्वयनिरीक्षिते ॥ १७४० ॥
सुखोदरपितृव्यादि[5]सन्तानारिष्टमादिशेत् ।
स्वदशायां फलं चिन्त्यं ज्ञातिवर्गे शिशुक्षयम् ॥ १७४१ ॥
दारान्तरं [6]च लभते जातकस्य शुभं वदेत् ।
सुरांशनाडिगे सूर्ये बुधे मेषापगाशगे ॥ १७४२ ॥
विष्णुयोगे मजातस्य पञ्चविंशात् परं सुखम् ।
लग्नेशांशपदोषेण [7]मोहनांशोद्भवस्य च ॥ १७४३ ॥
विंशोऽब्दे स्थाननाशादिक्लेशं स्याद्युवत्सरे ।
घने मन्देऽष्टमे भौमे षष्ठाधिपतिदायके ॥ १७४४ ॥
केकयोगफलं चेति महदैश्वर्यखण्डितम् ।
भाग्येशांशपयोगेन पञ्चविंशतिवत्सरे ॥ १७४५ ॥
एकोनविंशतौ[8] चैव राजप्रीतिधनागमम् ।
स्वज्येष्ठभ्रातृयोगेन स्वस्थानप्राप्तिमादिशेत् ॥ १७४६ ॥

---

1. अंशस्य जातके
2. स्वसेव
3. चेतस.
4. गुणं सत्यं
5. पितृव्यापि
6. प्रकुर्वीत
7. मोहनांशस्य जातके
8. विंशतिश्चैव

खराजदर्शनं चेति नित्यं सन्तोषमादिशेत् ।
सुखेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ॥ १७४७ ॥
तुलालग्ने प्रजातस्य[1] पुत्रलाभं विनिर्दिशेत् ।
सुताधिपदशान्त्ये[2] च प्रारंभे पष्ठपस्य च ॥ १७४८ ॥
भाग्येशांशपयोगेन पुण्यतीर्थे[3] सुतोत्सवम् ।
जीवे राहन्तरे काले मन्दे मन्दान्तरे[4]ऽपि च ॥ १७४९ ॥
सेतुस्नानफलप्राप्तिं[5] पुत्रलाभे विनिर्दिशेत् ।
तुला[6]ग्ने स्थिते जातो गोचरे स्वोपगे शनौ ॥ १७५० ॥
याम्यायने मोहनांशे गर्भाधाने [7]च स्वस्त्रियाम् ।
पितृव्यस्य सुतप्राप्तिर्दशान्ते सोदरस्य च ॥ १७५१ ॥
सन्तानोत्पत्तिमित्याहुर्बालारिष्टभयं क्वचित् ।
मेषापगांशगे सौम्ये दशमे रविसंयुते ॥ १७५२ ॥
तुलालग्ने प्रजातस्य ज्येष्ठभार्या सुपुत्रिणी ।
भाग्ये जीवे सुते चन्द्रे पुत्र[8]युक्तो न संशयः ॥ १७५३ ॥
ज्येष्ठभार्या त्रिसन्ता[9]ना शोकोनाशं गमिष्यति ।
मन्दे कुलालपट्यंशे दशायां शुक्रभुक्तिषु ॥ १७५४ ॥
तुलाग्गे प्रजातस्य ज्येष्ठभार्या मृतिं वदेत् ।
सुखान्तरेऽपमृत्युश्च सूतिकावायुपीडिता[10] ॥ १७५५ ॥
अग्निमा[11]न्द्यभयप्राप्तिः शान्त्या शान्तिं प्रयास्यति ।
घने मन्दे सुते शुक्रे मकरांशेऽर्क[12]संयुते ॥ १७५६ ॥

---

1. प्रजातश्च
2. आरम्भे पष्ठाधिपदशान्तगे
3. तीर्थे
4. दान्तरे तु च
5. प्राप्तिः
6. वारिस्थिते काले
7. च दारगे
8. पुत्रवांश्च
9. सन्तानभेदो नाशप्रदो भवेत्
10 पीडित.
11. अग्निमान्द्य
12. शीशिते

दारिद्र्याभावदोषेण ज्येष्ठभार्या [1]विनश्यति ।
तद्दोषपरिहारार्थं मद्यर्कं मपूजयेत् ॥ १७५७ ॥

दैव[2]ज्ञाय प्रदानेन दारारिष्टं [3]न विद्यते ।
शोभनांशकगे भौमे तुलाल[4]ग्नोद्भवस्य च ॥ १७५८ ॥

[5]आयुष्मती कलत्रे द्वे दारान्तरसुख महत् ।
दारद्वये सुतप्राप्तिः सत्सन्तानयोगवान् ॥ १७५९ ॥

[6]चिरायुषास्तेषु पञ्चपुत्रीपुत्रसमन्वितः ।
मुक्तापिपदशाकाले [7]त्विदमेव फलं स्मृतम् ॥ १७६० ॥

राजयोगं [8]च लभते भ्रातृभाग्य[9]युत सुखी ।
कर्मेशस्यांशगे मन्दे दशायां च स्वभुक्तिषु ॥ १७६१ ॥

राजयोगं [10]च लभते स्वस्थाने बहुभाग्यवान् ।
लाभेशो यत्रवां[11]शस्थे भुक्तिकाले महत् सुखम् ॥ १७६२ ॥

बहुरत्नसुवाहाप्ति[12] पुत्रलाभं च शोभनम् ।
भाग्येशनाडियोगेन कर्मेशांशदशा शुभा[13] ।
अनेकधर्मसिद्धिं स्याज्जीर्णोद्धारण[14]संयुता ॥ १७६३ ॥

विष्णुयोगे तुलालग्ने बुधे मेशपगांशके ।
सुतापिपदशाकाले बहुधर्म[15]करः सुखी ॥ १७६४ ॥

कर्मे सुरांशके[16] सूर्ये बुधे मेलापगांशगे ।
उत्कृष्टधर्मवान् कामी [17]स्थापको लग्नदारस्य ॥ १७६५ ॥

---

1. विनाशनम्
2. दैवज्ञस्य
3. निवारणम्
4. लग्नस्य आत्मजे
5. कलत्रद्वयमायुष्यं
6. पञ्चसङ्ख्याचि रायुष्यं
7. इदमेव
8. प्रकुर्वीत
9. भाग्यप्रद
10. प्रकुर्वीत
11. यत्रवांशेश
12. सुवाहाप्तिः
13. शुभम्
14. आदिशेत्
15. धर्मप्रदः
16. सुरांशगे
17. जन्मद्वाराभिनिष्टवान्

सर्वनाडीफलं [1]नैव गोचरेण प्रदृश्यते ।
तद्भावार्थरन्ध्रेशकामेशपतिदायगे ॥ १७७७ ॥

स्फुटयोगांशगे मन्दे चेष्टकम्रदृग्भुक्तिषु ।
श्मात् स[2]समगे मन्दे स्वर्भानुकुजवीक्षिते ॥ १७७८ ॥

किंचिद्रोगवती भार्या [3]दुष्टमूत्रादिपीडिता ।
तदभावे मोहनांशे प्रतिबन्धप्रपीडिता[4] ॥ १७७९ ॥

कालान्तरे सुतप्राप्तिर्दारान्तरमहासुखम् ।
कलांशाधिपतौ जीवे भाग्ये पूर्णबलान्विते ॥ १७८० ॥

विष्णुयोगे प्रज्ञातश्च विपद्दाये श्रिया [5]युतः ।
पितृयोगप्रभावेण [6]ह्याजन्माचन्तभोगवान् ॥ १७८१ ॥

भ्रातृभाग्यार्जितार्थादि[7]लाभो भवति नित्यशः ।
कलांशेशदशाकाले [8]स्वल्पलाभं शुभाशुभम् ॥ १७८२ ॥

जन्मदाये महासौख्यं विपद्दाये विशेषतः ।
चन्द्रचेष्टाकेन्द्रयोगे मन्दे पूर्णबलान्विते ॥ १७८३ ॥

तद्दशायां महाभाग्यं विष्णुयोगे स्वभुक्तिषु ।
विष्णुयोगे मोहनांशे राजपत्नीप्रसादवान् ॥ १७८४ ॥

राजान्तरवशाद्भाग्यं विपद्दाये श्रिया[9]युतम् ।
मन्दान्तरे क्रूरमासे दारपीडा कचिद्व्यथा ॥ १७८५ ॥

स्वदारवंशे सन्तापं [10]स्यालकस्य सुतोत्सवम् ।
शुभमासे फलं चेति प्रवासं क्रूरमासगे ॥ १७८६ ॥

---

1. चेति
2. समांशगे
3. दुःस्वप्नप्रदपीडिता
4. पीडितः
5. श्रियावहन्
6. जन्माद्यायुष्यभोगवान्
7. अर्थादिलाभो
8. अल्पलाभं
9. श्रियावहम्
10. सालकस्य

पुण्यतीर्थाटनं सौख्यमस्पलाभं सुशोभनम् ।
विपद्दाये मोहनांशे स्वभुक्तौ क्षामजं[1] भयम् ॥ १७८७ ॥

स्वगोलदायादिकलत्रपीडां-
नाशंवदेद्धिसगतेऽर्किदाये ।
सहोदरभ्रातृविभागमेति
राजान्त[2]रात् सौख्यसुभूषणा[3]सिम् ॥ १७८८ ॥

कीटे कुम्भांशगे मन्दे दशायां क्रूरभुक्तिषु ।
क्रूरमासे ज्वरं तापमथवा [4]राजविग्रहम् ॥ १७८९ ॥

स्वराजसहितश्चैव तीर्थ[5]क्षेत्राटनं चरेत् ।
ज्ञातिवर्गे विषभयं राजचोराग्निजं भयम् ॥ १७९० ॥

केतुभुक्तौ फलप्राप्तिः शुक्रभुक्तौ शुभाशुभम् ।
राजद्वारजनद्वेषं भुक्त्यन्ते व्याकुलं महत् ॥ १७९१ ॥

सूर्यान्तरे व्याकुलं स्या दादायादधिकव्ययम् ।
शुक्रभुक्त्यन्त्यमारभ्य मन्दे सूर्यान्तरान्तरे ॥ १७९२ ॥

[6]गुदनेत्रोदरव्याधिकृमिपीडां[7] विनिर्दिशेत् ।
मन्दे शुक्रान्तरे काले स्वगेहे शुभशोभनम् ॥ १७९३ ॥

पश्चाद्व्याकुलकार्याणि क्रूरमासे विनिर्दिशेत् ।
सूर्यान्तरे राजकार्यं स्वपमोक्ष महाविपत् ॥ १७९४ ॥

चन्द्रान्तरे जातकस्य [8]व्याप्यरोगं विनिर्दिशेत् ।
स्वपुत्रोद्वाहसौख्याप्ति[9] कुजभुक्तौ शुभाधिकम् ॥ १७९५ ॥

मश्लेषयोगलाभादि [10]शत्रुनाशं विनिर्दिशेत् ।
चन्द्रान्तरे सुखं किंचित् सर्वथा मनसि [11]व्यथाम् ॥ १७९६ ॥

---

1. क्षाम्बरम्
2. राजान्तरे
3. भूषणाप्तिः
4. राजविद्रुरम्
5. यात्राफलं
6. गुदाग्निगुदरव्याधि
7. पीडा
8. योगरोगं
9. सौख्याप्तिः
10. लाभादि
11. मनसिव्यथा

कुजान्तरे शुभं चेति भुक्त्यन्ते व्याकुलं महत् ।
मन्दे चन्द्रान्तरे काले स्वपमोक्ष महाविपत् ॥ १७९७ ॥

अमात्यजनसन्तापं स्वराजन्यजनावधि ।
राहुभुक्तौ बन्धुनाशं कुजभुक्तौ शुभक्षयम् ॥ १७९८ ॥

राजचोरकलापेन व्याकुलानन्तरं शुभम् ।
मन्दे राह्वन्तरे काले क्रूरांशे गोचरे शनौ ॥ १७९९ ॥

मोह्नांशे क्रूरमासे स्वजनारिष्टमादिशेत् ।
पितृव्यस्य मनस्तापं स्वगोत्रज्ञातिनाशनम् ॥ १८०० ॥

जातकस्य शुभं विन्द्याद्गुरुभुक्तौ शुभाशुभम् ।
लग्नात् कर्मायजामित्रभाग्याधिपतिभुक्तिषु ॥ १८०१ ॥

सुतेशस्य दशाकाले स्वगेहे शुभशोभनम् ।
[1]चन्द्रभुक्तौ दशान्त्ये वा निधनेशान्तरेऽथ वा ॥ १८०२ ॥

दारपीडां मनस्तापं सोदरादिमनोव्य[2]थाम् ।
शुभस्यानन्तरं दुःखं दुःखस्यानन्तरं शुभम् ॥ १८०३ ॥

गुरुभुक्तौ फलं चेति [3]कुम्भराश्युद्भवस्य च ।
कुम्भे मन्दांशगे चन्द्रे मन्दे [4]जीवांशके तथा ॥ १८०४ ॥

अशुभं तद्दशायां तु शुभं चेति क्वचित् क्वचित् ।
कुम्भे वर्गोत्तमे चन्द्रे दशाया गुरुभुक्तिषु ॥ १८०५ ॥

देहारोग्यं प्रकुर्वीत योगभङ्गो[5] न विद्यते ।
कुम्भत्रिकोणजातस्य चन्द्रचेष्टाफलं समम् ॥ १८०६ ॥

मन्ददाये शुभं चैव [6]तुलारम्भे प्रजायते ।
विपत्तारदशान्त्ये च सोदरभ्रातृशोकवान् ॥ १८०७ ॥

---

1. चन्द्रांशे च
2. मनोव्यथा
3. कुम्भचन्द्रस्य जातके
4. जीवान्तरान्तरे
5. योगभङ्ग
6. मिथुने लग्नजातके

तुलालग्ने चन्द्रदाये षष्ठेशांशत्रिकोणगे ।
स्फुटयोगं गते मन्दे भ्रातृशोकं विनिर्दिशेत् ॥ १८०८ ॥

तुलालग्ने दारहानिर्दशान्ते व्याकुलं महत् ।
सौम्यदायेऽपमृत्युश्च तुलालग्ने न विद्यते ॥ १८०९ ॥

मेलापगांशगे सौम्ये कुम्भे चन्द्रे घटांशगे ।
क्षेमदाये महाभाग्यं स्वभुक्तौ राज[1]विग्रहम् ॥ १८१० ॥

चन्द्रलग्नाष्टमाधीशदशायां च स्वभुक्तिषु ।
क्रूरमासे मनस्तापं स्वजनारिष्टमादिशेत् ॥ १८११ ॥

लाभेशस्य नवांशे[2]शदशायां धनलाभदा[3] ।
राजयोग[4] विभूषाप्ति पुत्रलाभं सुशोभनम् ॥ १८१२ ॥

वार्धके श्रीशुभाप्याप्ति[5] भाग्येशस्य [6]दशाशुभा ।
पुत्रिकोद्वाहसि[7]द्धिं च पौत्रलाभं विनिर्दिशेत् ॥ १८१३ ॥

भाग्ये जीवे प्रजातस्य भाग्याधिपतिदायगे ।
राजामात्यप्रसादेन धनलाभं विनिर्दिशेत् ॥ १८१४ ॥

कुम्भे कुम्भांशगे चन्द्रे तुला[8]लग्ने प्रजायते ।
क्षेमदाये शुभं चेति [9]स्वपुत्रस्य सुतोद्भवम् ॥ १८१५ ॥

व्ययाधिपदशाकाले स्वजन्मर्क्षेशभुक्तिषु ।
व्ययाधिपान्तरे वापि पुत्रनाशं विनिर्दिशेत् ॥ १८१६ ॥

क्षेमताराधिपे सौम्ये दशायां शुक्रभुक्तिषु ।
तुलालग्ने प्रजातस्य पुत्रिकाशोकमादिशेत् ॥ १८१७ ॥

षष्ठलेशदशाकाले [10]तद्व्ययेशस्य भुक्तिषु ।
षष्ठाधिपान्तरे वापि तद्भावफलनाशनम् ॥ १८१८ ॥

---

1. विग्रहम् 2. नवांशे च
3. लाभदम् 4. राजयोगविभूषाप्ति
5. भाग्याभिर्वांश्ये 6. [illegible]
7. सिद्धिः स्यात् 8. [illegible]
9. सुपुत्रस्य 10. [illegible]

भाग्याधिपदशाकाले सुखेशांशत्रिकोणगे ।
स्फुटयोगं गते मन्दे राज्याधिपतिनाशनम् ॥ १८१९ ॥

कर्माधि[1]पदशायां तु व्ययाधिपतिभुक्तिषु ।
स्वप[2]श्चाघ महारोगमपमृत्युं तथाश्रितः ॥ १८२० ॥

भाग्याधिपे कर्मगते बलाढ्ये
दशाविपाके लभतेऽर्थभूमीः ।
स्वपुत्रभाग्यं मुनयो वदन्ति
राजान्तरे भाग्यसुभूषणा[3]दिम् ॥ १८२१ ॥

व्ययाधिपदशाकाले वेधकग्रहभुक्तिषु ।
राजा राष्ट्रकलापेन देशान्तरनिवासवान् ॥ १८२२ ॥

पश्चात् स्व[4]स्थानमाप्नोति शुभग्रहदशान्तरे ।
धनलाभं [5]च लभते स्वराजप्रीतिमादिशेत् ॥ १८२३ ॥

शोभनांशकगे भौमे बुधे मेलापगांशगे ।
मोहनांशकगे शुक्रे त्रिमहांशफलं स्मृतम् ॥ १८२४ ॥

चन्द्रलग्नाष्टमाधीशदशायां शनिभुक्तिषु ।
मेलापगांशे जातस्य कालमृत्युं विनिर्दिशेत् ॥ १८२५ ॥

शोभनांशकगे भौमे पञ्चचत्वारिंवत्सरे ।
अपमृत्युभयप्राप्तिः शान्त्या शान्ति प्रयास्यति ॥ १८२६ ॥

मोहनांशकगे शुक्रे [6]ह्येकपञ्चाशवत्सरे ।
षट्पञ्चाशेऽपमृत्युश्च समानजनशोकवान् ॥ १८२७ ॥

तदर्धे मातृशोकः[7] स्याद्द्वात्रिंशाब्देऽथ वा यदि ।
मन्ददाये चापशनी कीटान्ते वा मनोव्यथा ॥ १८२८ ॥

---

1. कर्माधिपान्तरे वापि
2. स्वप्रश्चोध महारोगमपमृत्युमथा
3. भूषणाप्तिः
4. स्वर्गफलं चेति
5. प्रभुप्रीति
6. एक
7. मातृशोकं

एकषष्टिसमे मृत्युः [1]मासु कुम्भादिषु त्रिषु ।
त्रिमहांशफलं [2]योऽयं प्रत्यक्षं देवकेरलम् ॥ १८२९ ॥

पितृदेहमयव्याधिलमात्ररिष्टतः[3] परम् ।
त्रैलोक्यांशे फलं चेति दशासंधौ विधुर्विवत् ॥ १८३० ॥

[4]पुत्रेशस्य दशाकाले सन्तानोत्पत्तिभाग्यवान् ।
पुत्रनाशं [5]च लभते ज्ञातिद्वेषकलापवान् ॥ १८३१ ॥

सिंहे शनिस्थिते काले मृहच्छिद्रं शुभाशुभम् ।
विवाहो[6] सोदरभ्रातुः पितृ[7]व्येन सुवैरवान् ॥ १८३२ ॥

विपत्ताराधि[8]पकेतुदशायां भाग्यमश्नुते ।
ज्ञातिद्वेषकलापेन पृथग्व्यापारमादिशेत् ॥ १८३३ ॥

कन्याशनिस्थिते काले नवमे राहु[9]संस्थिते ।
अतीव क्लेशकार्याणि ज्ञाति[10]मूलेन दुःखितः ॥ १८३४ ॥

केतोर्द[11]शायां स्वभुक्तौ स्वबन्धुमरणं [12]भवेत् ।
रोगाधिपदशाकाले स्वभुक्तौ व्याकुलं महत् ॥ १८३५ ॥

मध्यखण्डे [13]च दुःखं स्यात् सहोदरसुखामयः ।
शुक्रांशभावनाडीषु त्रैलोक्यांश[14] दशाफलम् ॥ १८३६ ॥

[15]प्रोक्तं चै सत् स विस्तारं योजयेत्कालवित्तमः ।

—: ❋ :—

1. कुम्भादिसप्तमासके
2. वार्थे
3. मासाद्रिष्टतत्परम्
4. पुत्रमहद्दशाफले
5. प्रवर्धन
6. विवाहे
7. पितृव्यस्य
8. विपत्ताराधिपे
9. राहुस्थलगे
10. मूलादिकारणात्
11. केतोर्दशान्ते वा
12. पितुः
13. विपदे
14. त्र्यंशके
15. विस्तारमिति चाप्रेति योजयेत् कालवित्तमः ।

## मकरलग्ने गोप्रियांशः ।

गोप्रियांशे [1]झषांशे च मृगलग्नसमुद्भवः ॥ १८३७ ॥

रक्तवर्णतनुः प्राज्ञो भोगी वर्गोत्तमे सुखी ।
मीने मीनांशगे मन्दे [2]मृगलग्नसमुद्भवः ॥ १८३८ ॥

एकभ्रातृयुतः श्रीमान् सहोदरी[3] बहुत्ववान् ।
मेषांशे मिथुने [4]राहौ भृगुतेन समन्विते ॥ १८३९ ॥

मीने मन्दे प्रजातश्च भाग्यवानेक भ्रातृमान् ।
सम्पद्भावे द्वादशांशे सोदरोत्पत्ति[5]मान् भवेत् ॥ १८४० ॥

तत्पूर्वे सोदरभ्रातृनाश[6]श्चैव भविष्यति ।
वर्गोत्तमे विलग्नेशे तृतीये पापवर्जिते ॥ १८४१ ॥

एकभ्रातृप्रियो नित्यं बहुवित्ताम्बरः सुखी ।
वाणिज्यावस्थगे मन्दे मीने वर्गोत्तमांशगे ॥ १८४२ ॥

गोप्रियांशे प्रजातस्य बहुव्यापारजीवनम् ।
गोप्रियांशगते मन्दे गणेशांशकगे गुरौ ॥ १८४३ ॥

सम्पद्भावे राहुयुक्तौ सोदरोत्पत्ति[7]मान् भवेत् ।
सोदरादिदोषार्थं पूर्वो[8]क्तशान्तिमादिशेत् ॥ १८४४ ॥

तस्य भ्रातृफलं वक्ष्ये ज्येष्ठभ्रातृप्रियः सुखी ।
भगिनीत्रयवान् रागी [9]ह्यथवा वेदसङ्ख्यकाः ॥ १८४५ ॥

रवि[10]लधिकधर्मात्मा रविमित्रमहत्तुरयवान् ।
पितृव्यपरतो नित्यं देवब्राह्मणपोषकः ॥ १८४६ ॥

---

1. धर्मे लग्ने मकरे लग्नजातके
2. मकरे लग्नजातके
3. सहोदरबहुत्ववान्
4. राहु
5. भ्रातृमान्
6. नाश...मिति स्यात्
7. भ्रातृमान्
8. पूर्वोक्ते
9. अथवा च चतुष्टये
10. पिताधिक

मातृविश्वासवान् रागी राजद्वारे सुपूजितः ।
एकदाररतो नित्यं हरिशङ्करभक्तिमान् ॥ १८४७ ॥

पि[1]तृपुण्यप्रभावेण यौवने बहुभाग्यवान् ।
बहुपुत्रार्थसम्पन्नो भगिनीभ्रातृपोषकः ॥ १८४८ ॥

ज्येष्ठभ्रातृसुतद्वेषी ज्ञातिवर्गे प्रसिद्धिमान् ।
एवंभूतः स्वभ्राता च दीर्घायुरतिधार्मिकः ॥ १८४९ ॥

रमारूढपतौ शुक्रे दशायामुत्तरार्धके ।
अतीव क्लेशमाप्नोति गोप्रियांश[2]समुद्भवः ॥ १८५० ॥

प्रमोदांशे सुताधीशे रमेशे गोप्रियांशगे ।
पितामहः प्रसिद्धश्च मध्ये भाग्यसमृद्धिमान् ॥ १८५१ ॥

बहुभ्रातृयुतस्त्यागी वैदिकब्राह्मणप्रियः ।
स्वकुलाचारधर्मज्ञः स्वगोत्रज्ञातिपोषकः ॥ १८५२ ॥

बन्धुवर्गे सुपूज्यश्च स्वपितामहपुण्यवान् ।
[3]भाग्याधिपे गुरोरंशे प्रमोदांशे सुताधिपे ॥ १८५३ ॥

रमेशे गोप्रियां[4]शस्थे भोगी जन्मत्रय[5]सुखी ।
पितामहसुलोकाप्तिः पश्चादुत्तमजन्मवान् ॥ १८५४ ॥

स्वपिता भूपतिश्चैव पश्चाज्ज[6]न्मनि धार्मिकः ।
[7]जन्मन्यस्मिन् गोप्रियांशे स्वपिता पूजकालये[8] ॥ १८५५ ॥

चित्तविक्षेपदोषेण पश्चाद्भूपतिजन्मवान् ।
वीरस्वर्गफलप्राप्तिः पश्चा[9]द्राजन्यजन्मनि ॥ १८५६ ॥

नीचांशगे सुताधीशे स्वक्षेत्रे रविसंयुते ।
रमेशे गोप्रियांशस्थे पश्चाच्छूद्रकुलोद्भवः ॥ १८५७ ॥

---

1. पिता पुण्य
2. अंशस्य जातके
3. भाग्येऽधिपे गुरुरांशे
4. अंशस्य भोगी
5. जन्मत्रये
6. जन्मे गु
7. इह जन्मे
8. जन्मगे
9. जन्मनिगारकम्

सुतेशांशफलं सत्यं योजयेत् कालवित्तमः ।
गोप्रियांशे विलग्नेशे चन्द्रे पापांशनाडिगे ॥ १८५८ ॥

संपद्वाये विवाहं[1] च राहुशुक्रत्यन्त्यमादिशेत् ।
मीने वर्गोत्तमे मन्दे [2]तुलालग्नसमुद्भवः ॥ १८५९ ॥

संपद्वाये सिंहशनौ मीनमासे विवाहवान् ।
शनि[3]वक्रं गते काले मीनान्ते मेषगे गुरौ ॥ १८६० ॥

संपद्वाये विवा[4]हश्च मासु मीनादिषु त्रिषु ।
षष्ठे पापद्वये जातः कलत्रद्वययोगवान् ॥ १८६१ ॥

अथवा त्वयमित्याहुर्व्यये मन्दे स्थिते [5]सति ।
गोप्रियांशे विलग्नेशे तृतीये शनि[6]संस्थिते ॥ १८६२ ॥

भाग्ययोगं [7]च लभते ह्यल्पसन्तानवान् सुखी ।
मृतप्रजाबहुत्वं स्यादल्पसन्तानशोकवान् ॥ १८६३ ॥

ग्रन्थान्तरे विलग्नेशे गोप्रियांश[8]समुद्भवः ।
पितृ[9]धर्मस्वपुण्येन पुत्रीपुत्रसमृद्धिमान् ॥ १८६४ ॥

गोप्रियाक्षरसङ्ख्याश्च[10] सोदरास्तु चिरायुषः ।
पुत्रयोगं तथा विन्द्याच्छेषं नाशमितीरयेत् ॥ १८६५ ॥

चन्द्रांशे तत्त्रिकोणे [11]च स्फुटयोगं गते शनौ ।
जन्मदेशे त्वरिष्टं स्या[12]ज्जातस्य गोप्रियांशके ॥ १८६६ ॥

स्वपिता धनलाभादिव्यापारमफलं सुखम् ।
गोप्रियांशकगे मन्दे [13]तुलालग्नोद्भवस्य च ॥ १८६७ ॥

---

1. विवाहं स्यात्
2. मकरे लग्नजातके
3. शनिवक्रे
4. विवाहं स्यान्मीनादित्रयमासगे
5. स्थितेऽथ वा
6. जातके
7. प्रकुर्वीत
8. अंशस्य जातके
9. पिता
10. सङ्ख्यानि सोदरस्य चिरायुषम्
11. स्फुटेन
12. अरिष्टं स्याद्गोप्रियांशस्य जातके
13. मकरे लग्नजातके

सम्पद्दाये सिंहशनौ मातामहविनाशनम् ।
कन्याशनिस्थिते काले स्वपितुः[1] शत्रुवर्गगे ॥ १८६८ ॥

अतीव क्लेशकार्याणि राजवंशेऽ[2]प्यरिष्टदम् ।
तुलाशनौ पितृव्यस्य क्रूरमासे महाविपत् ॥ १८६९ ॥

तत्त्रिकोणे [3]मृतिश्च स्यात् स्वपितृव्यजनावधि ।
स्वर्भानुराशिगे मन्दे शत्रुभांशे त्रिकोणगे ॥ १८७० ॥

स्वगोत्रप्रवरज्ञाते[4]गोचरे मृतिमादिशेत् ।
व्ययेशांशे तत्त्रिकोणे व्ययेशदृष्टिराशिगे ॥ १८७१ ॥

स्फुटयोगे गते मन्दे सन्तानक्लेशमादिशेत् ।
गोमियांशकगे मन्दे क्षेमतारदशान्तरे ॥ १८७२ ॥

स्वपितुः[5] कालमृत्युश्च क्रूरमासे भविष्यति ।
रन्ध्राधिपदशाकाले स्वपि[6]तुर्वेधभुक्तिषु ॥ १८७३ ॥

[7]पितुर्व्याधिभयं च स्याच्छान्त्या शान्ति प्रयास्यति ।
सन्तानोत्पत्तिना[8]शश्च स्वदेहायासपी[9]डितः ॥ १८७४ ॥

गोमियांशे विपद्दाये स्वभुक्तौ[10] प्रबलं सुखम् ।
क्षेमदाये महाकीर्ती राजद्वारे सुभोगवान् ॥ १८७५ ॥

अयुनाधिक[11]वित्तेन नित्यश्रीसौख्यवान् सुखी ।
पापमहान्तरे काले क्षेमदाये कुलीरगे ॥ १८७६ ॥

स्फुटयोगे गते मन्दे सिंहे वा धननाशनम् ।
शनिप्रथमपर्याये वृश्चिके गोचरे शनौ ॥ १८७७ ॥

---

1. पिता शत्रु
2. अरिष्ट
3. मृति धी
4. हानिः
5. स्वपिता
6. पिता वेधभुक्तिषु
7. पितुर्देहभयव्याधिशान्त्या
8. नाशः
9. पीडनम्
10. स्वभुक्तिषु
11. स्वभावे

स्वशाबल्यं क्वचित् [1]पीडां स्वपितुर्देहपीडनम् ।
अतीव म्रियमाप्नोति चापे गोचरगे शनौ ॥ १८७८ ॥

[2]मेषत्रिकोणराशीषु स्फुटयोगं गते शनौ ।
तद्राश्याधिपतिक्लेशं विप्लवेन प्रजावधि ॥ १८७९ ॥

देशराश्यष्टमे भौमे सुखे वा दशमेऽपि वा ।
स्वर्भानुयोगे तत्काले तद्देशे प्रजावधि ॥ १८८० ॥

देशाधिपतिराशौ वा विप्लवेन महाविपत् ।
सर्वनाडीफलं [3]चैव निर्णयं गोप्रियांशके[4] ॥ १८८१ ॥

सुखाधिपदशान्त्यादौ[5] साधनेशस्वभुक्तिषु ।
[6]चन्द्रे च गोप्रियांशस्थे सुनाधिप[7]दशासु वा ॥ १८८२ ॥

मातामहविनाशादि मातृवंशे महाविपत् ।
स्वपि[8]तुर्भाग्यवृद्धिः स्याल्लक्ष्मीयोगवशात् सुखम् ॥ १८८३ ॥

वर्गोत्तमे विलग्नेशे लग्नारूढे भृगुस्थिते ।
शनिद्वितीयपर्याये लक्ष्मीयोगफलं शुभम् ॥ १८८४ ॥

तयोविंशात् परं भाग्य वृद्धिस्तस्य[9] दिने दिने ।
मन्दमे पञ्चमे शुक्रे लग्नेशे विक्रमे स्थिते ॥ १८८५ ।

जन्मप्रायुष्यपर्यन्तं धनिकः कीर्तिमान् सुखी
मधुमासे झषे मन्दे गोप्रियांश[10]समुद्भवः ।
लग्नारूढाधिपे शुक्रे पशुधान्यसमृद्धिमान्
भूषणाढ्यो महाभोगी तटाकोद्यानधर्मकृत्[11] ॥ १८८६ ॥

---

1. पीडा स्वपिता देहमेव च
2. मेषादिराशिगे तेषु
3. चेति
4. प्रियांशगे
5. शान्त्यादि
6. माता
7. दशेऽथ वा
8. स्वपितामाग्य
9. वृद्धिस्तस्या
10. भ्रष्टस्य जातके
11. धर्मवान्

साधनेशदशाकाले य इदं फलमश्नुते ।
सम्पत्तारदशान्त्यादौ[1] योगवान् कीर्तिमान् सुखी ॥ १८८७ ॥
क्षेमदाये विशेषः स्याद्बहुव्यापारलाभवान् ।
गोपियांशे झषे मन्दे [2]तुलालग्नसमुद्भवः ॥ १८८८ ॥
वार्धके क्लेशवान् किंचित् पुत्रशोकेन कर्शितः ।
[3]द्विपष्ठचन्द्रात् परं मृत्युर्वृषभस्थे दिवाकरे ॥ १८८९ ॥
शुक्लपक्षे पापवारे [4]वृषभस्थे दिवाकरे ।
उषःकाले [5]मृतश्चैव श्रेष्ठलोकं गमिष्यति ॥ १८९० ॥
परमायुस्तृतीयांशे सप्तचत्वारिंवत्सरम्[6] ।
अपमृत्युभयं किंचिच्छान्त्या शान्तिं प्रयास्यति ॥ १८९१ ॥
परलोकफलाध्याये लोकान्तरफलं स्मृतम् ।
गोपियांशकगे मन्दे द्वादशे केतुसंस्थिते[7] ॥ १८९२ ॥
देहान्ते नरकं किंचिद्भूलोक[8]प्राप्तिसौख्यवान् ।

—: * :—

## सिंहलग्ने बहुधान्यंशः ।

बहुधान्यंशगे सूर्ये [9]सिंहलग्नसमुद्भवः ॥ १८९३ ॥
वैश्यकाले प्रजातश्च[10] वैश्यजन्मा[11] सुखी भवेत् ।
बहुधान्यंशके [12]माता मेदनामयुता भवेत् ॥ १८९४ ॥
बहुधान्यंशके[13] सूर्ये लाभे त्रिग्रहसंयुते ।
सिंहलग्ने प्रजातश्च गर्भश्रीमान् सुखी भवेद् ॥ १८९५ ॥

---

1. दशान्त्यादि 2. मकरे लग्नजातके
3. द्विपष्ठाब्द 4. वृषभस्थे
5. मृतिं विन्द्यार्कटष्ट 6. सप्तचत्वारिंशत्परे
7. केतुजातके 8. भूलोके
9. वृषभे लग्नजातके 10. प्रजातस्य
11. जन्म 12. मातुर्भेद पर्यायेण मध्यम् 13. प्रजातस्य

भद्रांशे चाथ रक्षांशे फलमेकमुदाहृतम् ।
सिंहकाले दिवासूर्ये मीनांशे लाभराशिगे ॥ १८९६ ॥

बहुभाग्यार्थसंपन्न एकाकी भ्रातृहीनवान् ।
स्वपिता च तथा विन्द्या[1] जातस्य सिंहलग्नके ॥ १८९७ ॥

बहुधान्यांशगे सूर्ये लाभे भद्रांशके तथा[2] ।
धान्यांशे बहुधान्याप्तिः पित्रार्जितधनाढ्यवान् ॥ १८९८ ॥

वृषभांशे क्रियेचन्द्रे पापांशे कुजवीक्षिते ।
रामचन्द्रप्रसादेन जननी पुण्यहेतुना ॥ १८९९ ॥

षण्मुखव्रतपुण्येन धान्यांशजननं स्मृतम् ।
पापांशगे पूर्वभागे चन्द्रे कुजसमन्विते ॥ १९०० ॥

वैश्यजन्मा[3] सुखी नित्यं सीमन्ततनयः[4] स्मृतः ।
धान्यांशकगते सूर्ये चन्द्रे पापांशसंस्थिते[5] ॥ १९०१ ॥

सिंहलग्ने प्रजातश्च पश्चाद्भ्रातृविहीनवान् ।
एकाकी मतिमान् भोगी श्यामवर्णशरीरवान् ॥ १९०२ ॥

बहुस्त्रीसङ्गवान् कामी उष्णग्रन्थिप्रपीडितः ।
कामेशे राहुसंदृष्टे स्त्रीषांशे भृगुनन्दने ॥ १९०३ ॥

बाल्ये दुर्मार्गवृत्तिश्च बहुस्त्री[6]सङ्गवान् भवेत् ।
मेषे स्त्रीषांशके[7] चन्द्रे स्त्रीलोलः सुरतप्रियः ॥ १९०४ ॥

तद्दीशेन युते दृष्टे [8]कामतो ग्रन्थिरोगवान् ।
धनाधिपे लाभगते कर्मेशेन समन्विते ॥ १९०५ ॥

धान्यांशके प्रजातश्च[9] ह्ययुताधिकवित्तवान् ।
पितामहभ्रातृधनं स्वपिता[10]लभते ध्रुवम् ॥ १९०६ ॥

---

1. वृषभे लग्नजातके
2. जातके
3. वैश्यजन्म
4. सीमन्तशिशुजातकम्
5. जातके
6. पापवान्
7. स्त्रीषांशगे
8. कामाद्वै
9. प्रजातस्य भ्रातृपरं
10. प्रातिमान् भवेत्

धान्यांशके[1] प्रजातश्च हेमरत्नसुभूषितः ।
[2]धनधान्यसमायुक्तो स्वपिता कीर्तिमान् सुखी ॥ १९०७ ॥
मेहप्रकृतिदेहश्च[3] सोदरभ्रातृहीनवान् ।
स्थूलदेहस्वरूपश्च[4] बृहत्कुक्षिः सुधार्मिकः ॥ १९०८ ॥
संकष्टतप्रियो नित्यं हरिशङ्करभक्तिमान् ।
धान्यांशके पिता भीरुः कोपी शिवप्रसादकः ॥ १९०९ ॥
बहुव्यापारवान् रागी बुद्धिजीवनवान् सदा ।
उच्चारूढे निशानाथे [5]मात्रेशे लाभराशिगे ॥ १९१० ॥
शुभत्रयेण संयुक्ते [6]बहुनाधिकवित्तवान् ।
एकादृव्ययगते केतौ तदीशे कुम्भसंयुते ॥ १९११ ॥
स्वर्भानुयुतसंदृष्टे स्वपिता ज्ञातिवधकः ।
अन्यायार्जितवान् किंचित् किंचिन्न्यायार्जितः सुखी ॥ १९१२ ॥
स्वपिता फलमाप्नोति माता पुण्यवती [7]सती ।
पितामहाधिपे जीवे कुम्भांशे लाभराशिगे ॥ १९१३ ॥
पितामहमातृभाग्यं स्वपिता भाग्यवान् सुखी ।
लाभे धान्यांशगे सूर्ये धान्यांशे भृगुनन्दने ॥ १९१४ ॥
कश्चित् पितामह[8]माता मातृद्वयसमन्वितः ।
भगिनीद्वयवान् रागी द्रव्यार्जनसमर्थकः[9] ॥ १९१५ ॥
बाल्येऽल्पपुण्यवान् कामी पुत्रभावात् सुधार्मिकः ।
पुत्री[10]पुत्रो मतिदश्च राजद्वारे सुपूजितः ॥ १९१६ ॥

---

1. धन्यांशगे
2. धनधान्यादिभिः स्यात्
3. देहः स्यात्
4. स्यात्
5. मात्रेशे
6. बहुनाधिक
7. सुधी
8. पितामहाद्
9. समर्थन
10. पुत्रसौख्य

स्वर्णापहारक[1]स्नेही रत्नमूलाद्धनार्जकः[2] ।
अटाकोथान[3]निर्माता वैष्णवब्राह्मणप्रियः ।
किंचिद्वैदिकविश्वासी[4] सोदरभ्रातृपोषकः ॥ १९१७ ॥
मेहरोगी प्रसन्नात्मा दानशौण्डो दयापरः ।
धान्यांशकगते सूर्ये लाभस्थाने पितामहः ॥ १९१८ ॥
भ्रातृमूलात् प्रसिद्धश्च भ्रातृद्वयप्रपूजितः ।
पितामहस्वसा काचिद् बहुकालं सुजीवति ॥ १९१९ ॥
पुत्रक्लेशवती साध्वी भ्रातृशोकेन कर्शिता ।
एका पुत्रवती चेति बहुकालं सुमङ्गली ॥ १९२० ॥
पितामहस्वसारौ द्वे केचित्पक्षे मृत[5]प्रजे ।
लाभे धान्यांशगे सूर्ये मातृष्वसृबहुत्ववान् ॥ १९२१ ॥
स्वमातृद्वयवान् रागी [6]ह्येकमातुलनाशकः ।
लग्नाद्व्ययगते मन्दे कुम्भांशे राहुवीक्षिते ॥ १९२२ ॥
[7]अयुष्मती स्वमाता च भ्रातृशोकेन कर्शिता ।
[8]त्रिमातृष्वसॄणां मध्ये त्वेका दीर्घसुमङ्गली ॥ १९२३ ॥
शेषं नाशमितिप्राहुर्मातृष्वसृफलं स्मृतम् ।
धान्यांशकगते सूर्ये [9]जातस्य सिंहलभके ॥ १९२४ ॥
मातृष्वसा च या काचिद्वपुत्रवती भवेत् ।
लग्नाच्चतुर्थगे मन्दे तदंशे राहुवीक्षिते ॥ १९२५ ॥
स्वपिता व्याध्यरोगेण क्लेशं प्राप्नोति भूरिशः ।
पाशांशगे निशानाथे भृगुतेन समन्विते ॥ १९२६ ॥

---

1. स्नेहं
2. धनार्जितः
3. धर्मात्मा
4. विश्वासं
5. मृतप्रजा
6. एको मातुलनाशवान्
7. स्वमाता दीर्घजीवी स्याद्भ्रातृशोकेन
8. मातृष्वसा सर्वं द्वे द्वे बहुकालं
9. सिंहलभस्य जातके

पिता[1]महो ज्वरयुतो बहुमूत्रप्रपीडितः ।
तद्भावे च दुर्गन्धिसर्वाङ्गव्रणरोगवान् ॥ १९२७ ॥

तद्रोगपरिहारार्थं शान्तिं कुर्याद्विचक्षणः ।
तस्मात् षष्ठांशगे सूर्ये [2]रोगस्थाने शुभान्विते ॥ १९२८ ॥

धान्यांशगे प्रजातस्य स्वपिता मूत्रकृच्छ्रवान् ।
मेहादिमूत्रकृच्छ्राणि [3]पितुर्धान्यांशजस्य च ॥ १९२९ ॥

स्वपि[4]तुर्व्याधिशान्त्यर्थं रोग[5]मूर्तिं प्रदापयेत् ।
दामोदरं दीर्घकायं [6]रक्तास्यं रक्तलोचनम् ॥ १९३० ॥

प[7]ड्क्षिलिशिरस्कं च करालवदनान्वितम् ।
प्रेतारूढं पाशधरं रोगमूर्तिं च [8]गन्धकम् ॥ १९३१ ॥

[9]कपालाग्निं कुठारं च सैरक्ताक्षधरं तदा ।
पुरुषाकार[10]रूपं च मुक्तकेशास्थिधारिणम् ॥ १९३२ ॥

एवंविधां रोगमूर्तिं ध्यात्वा पूजां विधानतः ।
[11]तिलगन्धाक्षतैः पुष्पैः नैवेद्यं सतिलोदकम् ॥ १९३३ ॥

दशनिष्कप्रमाणेन [12]कृत्वा पूजां समाचरेत् ।
[13]त्रिगुणं प्रतिमायाश्च दक्षिणात्वेन कल्पयेत् ॥ १९३४ ॥

ये ये रोगाः प्रबाधन्ते देहस्थाः सततन्तु मां ।
तत्सर्वं [14]नाशय क्षिप्रं रोगमूर्तिप्रदानतः ॥ १९३५ ॥

शान्तिं देहि सुखं देहि [15]त्वारोग्यं देहि मे सदा ।
आयुर्बलं च कान्तिं च देहि मे सर्वसम्पदः ॥ १९३६ ॥

---

1. पितामहज्वरात्मक
2. रोगस्थे
3. धान्यांशश्चैव जातके
4. पितारिष्टशान्त्यर्थं
5. वृद्धिं प्रदापयेत्
6. रोगास्य
7. षट्कुक्षि
8. रोगवृद्धिं
9. कालाग्निं च
10. रूपेण
11. नीलगन्धा
12. पूजादानं
13. प्रतिमां त्रिगुणीकृत्य दक्षिणे भाग्यमादिशेत् ।
14. नश्यति
15. आरोग्यं

धान्यांशकगते सूर्ये लग्नाद्द्वादशगते शनौ ।
मद्याज्यकुम्भदानेन देहाद्रोगः प्रशाम्यति ॥ १९३७ ॥

[1]मृत्युञ्जयं त्वेकलक्षं जप्त्वा त्र्यक्षरिसंयुतम् ।
दशांशं च हवनं तर्पणं तु ततः परम् ॥ १९३८ ॥

ब्राह्मणानां भोजनं च कृत्वान्ते सौख्यमश्नुते ।
धन्यङ्गारकयोः शान्ति होमान्ते दानमाचरेत् ॥ १९३९ ॥

स्वपिताऽऽरोग्यमाप्नोति दीर्घमायुश्च विन्दति ।
एकाशीतिपदे चक्रं [2]पूजान्ते दानमाचरेत् ॥ १९४० ॥

स्वपिताऽऽरोग्यमाप्नोति [3]हि ह्यपमृत्युर्विनश्यति ।
कर्माधिपदशाकाले भाग्याधिपतिभुक्तिषु ॥ १९४१ ॥

[4]पितुश्च रोगवृद्धिः स्याच्छान्ति कुर्याद्विचक्षणः ।
सिंहे शनिस्थिते काले [5]जातस्य सिंहलग्नके ॥ १९४२ ॥

स्वपि[6]तुर्देहजाड्यं स्यात् संचितार्थविनाशनम् ।
चण्डधान्यांशगे सूर्ये षोडशाब्दे [7]पितुर्विपद् ॥ १९४३ ॥

एकविंशाब्दमारभ्य द्वाविंशाब्दे पिता रुजम् ।
षड्विंशाब्दे तथा विद्याद् [8]विपदं च दशान्तरे ॥ १९४४ ॥

पाशांशके[9] निशानाथे बहुधान्यंशके गुरौ ।
षड्विंशाब्दे पितारिष्टमत ऊर्ध्वं न जीवति ॥ १९४५ ॥

---

1. लक्षमृत्युञ्जयादीनितद्दशांशविधिक्रमम् ।
   मृत्युंजयेति मन्त्रेण जपहोमादितर्पणम् ॥
   ब्राह्मणान् भोजयेत् पश्चाज्जपान्ते सौख्यमादिशेत् ।
   शन्यङ्गारकशान्तिः स्याद्विधिवद्दानमाचरेत् ॥
2. पूजादानं समाचरेत्
3. भाग्यातिरपमृत्युः
4. स्वपिता
5. सिंहलग्नस्य जातके
6. पिता देहजाड्यं
7. पिता विपत्
8. दशायन्धौ महद्विपत्
9. अंशगे

सूर्ये लग्ने सूर्यकाले [1]पापदृष्टियुते तथा ।
यस्यां[2] नाड्यांप्रजातस्य पितृपीडा भविष्यति ॥ १९४६ ॥

सुखेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ।
स्वपितुर्देहजाड्यं [3]च व्याकुलं भवति ध्रुवम् ॥ १९४७ ॥

शुभत्रययुते सूर्ये लाभे धान्यांशजो[4] भवेत् ।
सर्वलक्षणसंपन्न[5]स्त्वष्टैश्वर्ययुतश्च सः ॥ १९४८ ॥

सम्पदाये विवाहे [6]च मनुवर्षात् परं सुखम् ।
कुम्भांशके सुखाधीशे चतुर्थे कीटराशिगे ॥ १९४९ ॥

ईशान्यभागे [7]चोद्वाहो मातुलस्य गृहे शुभम् ।
गुरुद्वितीयपर्याये स्वोच्चादित्रयराशिगे ॥ १९५० ॥

मधुमासे शुक्रपक्षे विवाहो[8] भवति ध्रुवम् ।
सुतेशे लाभराशिस्थे लग्नेशेन समन्विते ॥ १९५१ ॥

बहुपुत्रार्थसंपन्नो रक्तवर्णकलत्रवान् ।
धान्यांशे बहुसन्तानं पञ्चलक्ष्याचिरायुषा[9] ॥ १९५२ ॥

शेषं नाशमिति प्राहुः स्त्रीपजाद्वयवान् [10]सुखी ।
एकविंशान्त्यमारभ्य द्वाविंशे दक्षिणायने ॥ १९५३ ॥

लाभाधिपान्तरे काले पुत्रोत्पत्ति[11]र्भविष्यति ।
सीमन्त[12]पुत्रो ह्यायुष्मान् पापांशजनितस्य च ॥ १९५४ ॥

सुतेशांशे तत्त्रिकोणे पुत्रजन्मर्क्षमं विदुः ।
[13]सुतेशाष्टमराशीषु पुत्रलभं भवेद्ध्रुवम् ॥ १९५५ ॥

---

1. पापाक्रान्तस्य कालगे
2. यस्य
3. पिता देहजाड्यं स्याद्व्याकुलम्
4. जातके
5. अष्टकुटाशसौख्यवान्
6. स्यात्
7. उद्वाहं स्वमातुलगृहे शुभम्
8. विवाहं
9. चिरायुषम्
10. सुखम्
11. पुत्रोत्पत्तिमिति स्मृतम्
12. पुत्रमायुष्यं पापांशस्यैव जातके
13. सुतेशे चाष्टराशीषु स्वपुत्रोत्पत्तिलभवान्

लाभेशे[1] निधनांशस्थे शुभग्रहसमन्विते ।
स्वभार्यासूतिकाकाले बहु[2]क्लेशवती भवेत् ॥ १९५६ ॥

पुत्रत्रयवतीभार्या पुत्रिकाद्वयसंयुता ।
सहोदरभ्रातृयुता भगिनीपुत्रसंयुता ॥ १९५७ ॥

[3]दीर्घमाङ्गल्ययुक्ता च मध्ये भ्राता च दुःखिता ।
लाभे प्रभूतधनवान् बहुधान्यंशके[4] रवौ ॥ १९५८ ॥

प्रसन्नयोगजातश्च[5] विप्रार्जितधनाढ्यवान् ।
मेषे स्वोच्चांशके[6] चन्द्रे [7]स्वपात्रव्ययकामुकः ॥ १९५९ ॥

कालान्तरे धर्मबुद्धिर्बहुव्यापारवान् सुखी ।
दायादिवशमापन्नः पापांशे पापचेतन.[8] ॥ १९६० ॥

सम्पद्दाये पापफलं देहालस्यं क्वचित् क्वचित् ।
विपद्दाये भाग्यवृद्धिः स्वबुद्धिप्रबलो[9]भवेत् ॥ १९६१ ॥

लग्नाधिपदशाकाले दशादौ बहुभाग्यवान् ।
स्वभावस्थं [10]च लभते धनवृद्धिश्रिया [11]युतः ॥ १९६२ ॥

गुरुतृतीयपर्याये धनवृद्धि[12]युतः सुखी ।
लग्नाधिपदशाकाले नित्यश्रीसौख्यमश्नुते ॥ १९६३ ॥

शनिप्रथमपर्याये धान्यांशे[13] च प्रजायते ।
मिथुने व्याकुलं चैव सिंहराशौ धनक्षयम् ॥ १९६४ ॥

स्वगो ज्ञातिवर्गेषु सन्तानक्लेशमादिशेत् ।
लग्नाद्वा चन्द्रलग्नाद्वा [14]फलमेवं विचिन्तयेत् ॥ १९६५ ॥

---

1. लाभेश
2. बहुवेदनमादिशेत्
3. बहुकालं सुमाङ्गल्यं मध्ये भ्रातृविचारिणी ।
4. धान्यंशगे
5. जातस्य
6. अंशगे
7. अपात्र
8. चेतसः
9. प्रबलं
10. प्रकुर्वीत
11. श्रियावहम्
12. प्रियः
13. धान्यांशश्चैव जातके
14. इदं फलमुदाहृतम्

स्वर्भानुराशि[1]कोणे च स्वंशेवा तत्त्रिकोणके ।
स्फुटयोगं गते मन्दे धान्यांशे जाति[2]विग्रहम् ॥ १९६६ ॥

स्वजन्मदेशे कलहं राज्याधिपतिनाशनम् ।
अनावृष्टिभयं [3]चापि प्रजापीडां विनिर्दिशेत् ॥ १९६७ ॥

[4]कुजे मूढे च कलहो स्वपिता देहजाड्य[5]वान् ।
स्वप्रभोश्च विशेषेण क्रूरमासे भविष्यति ॥ १९६८ ॥

क्षेमताराधिपे चन्द्रे भाग्याधिपसमन्विते ।
धान्यांशे बहुभाग्यातिर्गेहे कल्याणसंभ्रमः[6] ॥ १९६९ ॥

सन्तानोत्पत्तिनाशादि स्तन्मूलात् क्लेशवान् [7]भवेत् ।
पाके सर्वदशा[8]संधौ क्लेशं प्राप्नोति भूरिशः ॥ १९७० ॥

षष्ठाष्टमाधीशभुक्तौ संधिकाले मनोव्य[9]थाम ।
क्रूरमासे धनच्छेदं किंचिद्व्यापारविघ्नवान् ॥ १९७१ ॥

व्यये [10]केतौ प्रजातश्च व्ययेशे कुजसंयुते ।
मार्जारमूषिकादीनां[11] विषपीडाज्वरातुरः ॥ १९७२ ॥

क्षेमदाये फलं सत्यं शान्त्या शान्ति प्रयास्यति ।
सुखाधिपदशाकाले धान्यां[12]शे जनितस्य च ।
लग्नाद्वा चन्द्रलग्नाद्वा मा[13]तरिष्टं विनिर्दिशेत् ॥ १९७३ ॥

पितामहस्य वा मृत्युः सम्पद्दाये बुधान्तरे ।
केत्वन्तरे मृतिं [14]चैव मातुलस्य सुतक्षयम् ॥ १९७४ ॥

---

1. राशिगे कोणे अंशे
2. विड्वरम्
3. चेति
4. कुंजास्तमाने कलहं
5. जाड्यकृत्
6. संभ्रमम्
7. क्वचित्
8. दशासंधि
9. मनोव्यथा
10 केतु
11. मूषिकादीनि
12. अंशाधिव जातके
13. मातुः
14. चेति स्वमातुलस्य सुतक्षयम्

ज्ञातिवर्गे विवाहं [1]च सुतभुक्तौ महत् सुखम् ।
सम्पद्दशाधिपे मन्दे पितामहसुतक्षयम् ॥ १९७५ ॥

[2]तत्पुत्रौ पापिनौ चैव निर्धनेन [3]च दुःखितौ ।
कालान्तरेऽल्पसौख्यं स्यान्मूलरोगेण [4]कर्शितौ ॥ १९७६ ॥

पितामहभ्रातृसुतः कश्चिद्रोगशरीरवान् ।
कश्चिदालस्य[5]युक्तश्च स्वमुपार्जितसौख्यवान् ॥ १९७७ ॥

भाग्याधिपदशाकाले स्वदेश[1]भुनाशनम् ।
जन्मदाये तथा विन्द्यात् स्वपिता धनलाभ[6]वान् ॥ १९७८ ॥

कर्माधिपदशाकाले प्रसुद्वयविनाशनम् ।
जन्मदेशे द्विवारं च दायादि[7]कलहो महान् ॥ १९७९ ॥

प्रसुवर्गे विशेषं स्यात् कोशाश्वादिधनक्षयम् ।
स्वभुक्तौ व्याकुलं चैति बुधभुक्तौ विशेषतः ॥ १९८० ॥

वृषभांशे क्रिये चन्द्रे स्थिरराशिचतुष्टये ।
स्फुटयोगं गते मन्दे पाण्ड्यदेशेषु[8] विग्रहः ॥ १९८१ ॥

तद्द्वारमुख्यप्रमुखैः क्लेशं प्राप्नोति भूरिशः ।
सम्पद्दाये जन्मदेशे भाग्याधिपति[9]सुक्तिषु ॥ १९८२ ॥

इदमेव फलं सत्यं पापांशे[10] जनितस्य च ।
स्वर्मानुदाये पापांशे पुत्रपापत्यमादिशेत् ॥ १९८३ ॥

यावद्दायुष्यमाप्नोति तावद्भाग्यं शुभाधिकम् ।
धान्यांशकगते सूर्ये पापांशे च निशाकरे ॥ १९८४ ॥

---

1. स्याद्
2. तत्पुत्रद्वयवान् पापी
3. मनोव्यथा
4. कर्शितः
5. मित्राद्युः
6. लाभकृत्
7. कलहं महत्
8. कलापहृत्
9. दायगे
10. पापांशश्चैव जातके

स्वपिता सुकृती नित्यं [1]शूद्रस्य स्नेहहेतुना ।
वैदिकाचारधर्मात्मा देवब्राह्मणपोषकः ॥ १९८५ ॥

स्वमाद्वा चन्द्रलग्नाद्वा तृतीये [2]शुभसंयुते ।
स्वपिता धर्मबुद्धिश्च ज्ञानधर्म[3]युतः सुखी ॥ १९८६ ॥

सम्पद्दाये जन्मशनौ स्वपि[4]तुर्मित्रवर्गके ।
अतीव क्लेशमाप्नोति मिथुने व्याकुलं महत् ॥ १९८७ ॥

लाभेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ।
स्वपिता मित्रवर्गेषु क्लेशं प्राप्नोति भूरिशः ॥ १९८८ ॥

बन्धुवर्गे व्याकुलं स्याद्दारवंश[5] जनावधि ।
स्वपिता मित्रव[6]र्गेण विपद्दाये श्रिया[7]न्वितः ॥ १९८९ ॥

सम्पद्दशान्त्यमारभ्य मित्रवर्गे महत् सुखम् ।
रन्ध्राधिपदशाकाले बहुधान्यंश[8]जस्तथा ॥ १९९० ॥

स्वभुक्तौ मृतिमाप्नोति तुलामासे न संशयः ।
तत्त्रिकोणे कृष्णपक्षे मन्दवारे मृतिं वदेत् ॥ १९९१ ॥

धान्यांशकगते सूर्ये स्वपिता पुण्यश्लोकवान् ।
जात[9]कोऽपि तथा चैव निधनेशदशाविपत् ॥ १९९२ ॥

सुखेशे चन्द्रसंयुक्ते पापांशे [10]च प्रजायते ।
पश्चाद्वैश्यकुले जन्म पूर्वजन्म तथा भवेत् ॥ १९९३ ॥

[11]पितुश्च जातकस्यैव त्विदं फलमुदाहृतम् ।
सत्पात्रदानपुण्येन भाग्यजन्मत्रयं विदुः ॥ १९९४ ॥

---

1. स शूद्रस्नेहहेतुना
2. योगजातके
3. धर्मप्रदः
4. पिता मित्रवर्गगे
5. दारवंशे
6. मित्रवर्गेषु
7. श्रियावहम्
8. जातके
9. जातकस्य तथा विन्यात्
10. वैश्यजातके
11. स्वपिता जातकश्चेति इदं

स्वपिता जननं क्षिप्रं स्वगर्भे नात्र संशयः ।
धान्यांशकगते सूर्ये द्वादशे केतु[1]संस्थिते ॥ १९९५ ॥
तदीशे कुजसंयुक्ते बहुकालं सुलोकवान् ।
नरकं च तथा विन्द्याज्जनकस्य[2]फलं त्विदम् ।
स्वपिता [3]सुकृती भाग्याद्यावज्जीवं सुसौख्यवान् ॥ १९९६ ॥
वार्धके पुत्र[4]नाशश्च व्यये केतौ च संस्थिते ।
बहुधान्यंके भाग्ये सूर्यनाडीफलं स्मृतम् ॥ १९९७ ॥

—: * :—

## सिंहलग्ने कुटिलांशः

कुटिलांशे स्थिरे लग्ने पूर्वभागे प्रजायते ।
शूद्र[5]जन्मा सुखी नित्यं [6]द्वितीयगर्भजः स्मृतः ॥ १९९८ ॥
सिंहे सीमन्तपुत्रः स्यात् कुटिलांशे प्रतापवान् ।
उत्तरांशे प्रजात[7]श्च पञ्चमोऽयं प्रकीर्तितः ॥ १९९९ ॥
पश्चाद्भ्रातृयुतो मानी रक्तवर्णशरीरवान् ।
पूर्वभागे [8]प्रजातश्च ज्येष्ठभ्रातृविहीनवान् ॥ २००० ॥
वनान्तरपुरे [9]वासो जननं वा भविष्यति ।
दक्षिणोत्तरवीथ्योश्च पश्चिमे [10]प्रसवो भवेत् ॥ २००१ ॥
अथवा पूर्वदिग्भागे पूर्वभागे प्रसूतिमान् ।
[11]पूर्वभागे मध्यखण्डे पूर्वपश्चिमवीथ्योश्च ॥ २००२ ॥

---

1. जातके
2. इदं फलम्
3. सुकृते भाग्यं यावत्
4. पुत्रनाशं स्याद् व्यये केतुश्च जातके
5. शूद्रजन्म
6. द्वितीये गर्भजातके
7. प्रजातस्य पञ्चमे गर्भजातके
8. सुतश्चेद्
9. वासं
10. भागजातके
11. पूर्वादूमे मध्यखण्डे प्राक्पश्चिमसुदी

स्वगृहे जननं [1]चैव ह्यन्यगेहेऽथ वा भवेत् ।
कुटिलांशे सिंहलग्ने पूर्वभागे[2] प्रजायते ॥ २००३ ॥

नालवेष्टनमाप्नोति [3]ह्युत्तरांशे न विद्यते ।
रूपवान् मतिमान् वाग्मी प्रसन्नमुखनेत्रवान् ॥ २००४ ॥

भद्दष्टशाली धर्मात्मा शूद्र[4]जन्मा सुखी भवेत् ।
नीलवर्णो मध्यगात्रः किंचित् स्थूल[5]शरीरवान् ॥ २००५ ॥

विद्यावान् युक्तिमान् वाग्मी लेख्यविद्याविचक्षणः ।
[6]स्वभाषायां कविर्वाग्मी त्यागभोगवदान्यवान् ॥ २००६ ॥

कुटिलांशे सिंहलग्ने पूर्वभाग[7]समुद्भवः ।
एकभ्रातृयुतः श्रीमान् मांसाहारप्रियो भवेत् ॥ २००७ ॥

नानाविद्याप्रियो नित्यं हरिशङ्करभक्तिमान् ।
विष्णुभक्तिविशेषेण मातृवा[8]क्यविरोधकः ॥ २००८ ॥

[9]न शृणोति पितुर्वाक्यं राजसप्रकृतिर्भवेत् ।
लग्नेशे शुभसंयुक्ते किंचित् सात्त्विकबुद्धिमान् ॥ २००९ ॥

कुजदृष्टिवशात् कोपी दुष्टबुद्धिः कचित् कचित् ।
पितामहस्य सन्तोषी पितृ[10]भाग्यसमन्वितः ॥ २०१० ॥

मातृसौख्यसमायुक्तो भ्रातृभार्याजनैर्युतः ।
कुटिलांशे पूर्वभागे सिंहलग्न[11]समुद्भवः ॥ २०११ ॥

पितृमूला[12]लब्धभाग्यो भ्रातृसौख्यसमन्वितः ।
भ्रातृद्वय[13]सुपूज्योऽपि ह्येकभ्रातृयुतो भवेत् ॥ २०१२ ॥

---

1. चेति ह्यन्यगेहे तथा भवेत्
2. भागस्य जातके
3. ह्युत्तरांशे
4. शूद्रजन्म
5. समन्वित.
6. स्वभापकविता वग्मी
7. भागस्य जातके
8. वाक्यं न शृण्वति
9. पितुवाक्यं तथा विद्याशाजय
10. पितृसौख्य
11. लग्नस्य जातके
12. भाग्यवृद्धिः
13. सुपूज्यश्च एक

सिंहलभे[1]कन्यकांशे द्वन्द्वारूढे च जायते ।
वेश्यावाक्यरतो नित्यं स्वदारस्य प्रियः सुखी ।
कुटिलांशे पूर्वभागे सिंहलभ[2]समुद्भवः ॥ २०१३ ॥
[3]कन्यांशे चैकपुत्रश्च सन्तानप्रतिबन्धवान् ।
राजद्वारे सुपूज्यश्च नरवाहनभाग्यवान् ॥ २०१४ ॥
दुर्गतिप्रदवृत्त्या [4]च जीवनं राजसेवया ।
उत्तरांशे ग्रामणीः स्याद् व्यवसायपरो भवेत् ॥ २०१५ ॥
धनिकः कीर्तिमान् भोगी सत्कलत्रप्रियः सुखी ।
नरवाहनहीनश्च [5]द्युत्तरांशे सदा धनी ॥ २०१६ ॥
बहुभ्रातृयुतस्त्यागी ज्येष्ठभ्रातृविनाशवान् ।
मातृलयसमायुक्तो भ्रातृप्राबल्य[6]मश्नुते ॥ २०१७ ॥
जातको जननात् पूर्वं पितामह[7]विनाशकः ।
पितामही[8]नाशयुतो द्युत्तरांशे प्रजायते ॥ २०१८ ॥
पूर्वभागे मध्यखण्डे जननं [9]लभते हि यः ।
देवब्राह्मणभक्तश्च वैष्णवद्विजभक्तिमान् ॥ २०१९ ॥
वीरवैष्णववान् पापी शिवनिन्दापरो भवेत् ।
तस्य पापवशादन्ते दन्त[10]हानिं विनिर्दिशेत् ॥ २०२० ॥
मध्यखण्डे प्रजातश्च[11] हरिशङ्करभक्तिमान् ।
कालान्तरे देहसौख्यं मध्ये क्लेशेन कर्शितः ॥ २०२१ ॥
बाल्ये सौख्यमवाप्नोति पितृमूलात् सुखी भवेत् ।
कुटिलांशे पूर्वभागे मध्यखण्ड[12]समुद्भवः ॥ २०२२ ॥

---

1. लग्नस्य कन्यांशे द्वन्द्वरूढस्य जातके
2. लग्नस्य जातके
3. कन्यां प्रियैकपुत्रस्य
4. वृद्धिः स्याज्जीवनं
5. अन्तरांशे
6. आदिशेत्
7. अरिष्टवान्
8. तथा विन्द्या द्युत्तरांशे
9. रसखे भवेत्
10. दद्यान्मध्यदन्तक्षीणं
11. प्रजातस्य
12. लग्नस्य जातके

देवतागुरुभ[1]क्तश्च कृषिपश्वादिमाश्रयवान् ।
वाहनद्वयवान् रागी [2]द्युष्णदेहसमन्वितः ॥ २०२३ ॥

वातप्रकृतिमान् किंचिन्मध्ये वातप्रपीडितः ।
बाल्ये सौख्यप्रपन्नश्च मध्ये क्लेशेन कर्शितः ॥ २०२४

परेङ्गित[3]ज्ञश्चतुरः स्वबन्धुजनपोषकः ।
चिरजीवी प्रसन्नात्मा छन्नपापी रतिप्रियः ॥ २०२५ ॥

वैष्णवस्नेहवान्नित्यं वेश्यास्त्रीगृहवासवान् ।
पिशुनश्चपलो भीरुः पापकर्मा निरामयः ॥ २०२६ ॥

कालान्तरे वातरोगी मध्यखण्ड[4]समुद्भवः ।
पितामहाधिपे जीवे शन्यङ्गारकवीक्षिते ॥ २०२७ ॥

पितामहश्च[5] दीर्घायुर्भ्रातृभ्रात्रीसमन्वितः ।
कृषिजीवनवान्नित्यं कुग्रामे वासवान् भवेत् ॥ २०२८ ॥

वार्धके पुत्रमूलेन सौख्यं च मनुरब्रवीत् ।
पिताम[6]हश्चिरायुष्मान् पुत्रक्लेशेन कर्शितः ॥ २०२९ ॥

कुटिलांशे पूर्वभागे मध्य[7]खण्डोद्भवस्य च ।
सुतेशे शनिसंदृष्टे [8]दरिद्रश्च पितामहः ॥ २०३० ॥

पुत्रमूलात् सुसन्तोषी वार्धके [9]श्रीयुत सुखी ।
पितृस्थानाधिपे भौमे स्वक्षेत्रे शनिसंयुते ॥ २०३१ ॥

स्वपिता नीलवर्णश्च प्रमाणोन्नतदेहवान् ।
भ्रातृक्लेशप्रदो मानी बाल्ये दारिद्र्यकर्शितः ॥ २०३२ ॥

---

1. भक्तिश्च
2. उष्णदेह
3. परेङ्गितश्चतुरः
4. खण्डस्य जातके
5. पितामहस्य
6. पितामहश्चिरायुष्यं पुत्रक्लेशवती भवेत्
7. खण्डस्य जातके
8. पितामह दरिद्रवान्
9. श्रियवान्

कुटिलांशे पूर्वभागे [1]जातस्य मध्यखण्डके ।
देवालयाधिप[2]त्येन पश्चात् प्राबल्यवान् पिता ॥ २०३३ ॥

कुटिलांश[3]जस्य पिता विष्णुवंशे राजपूजितः ।
बाल्ये दारिद्र्यमापन्नः प्रेष्यजीवनवान् सुखी ॥ २०३४ ॥

पुत्रोत्सवात् परं भाग्यं वनस्थलनृपप्रियः[4] ।
देवालयाधिकारी[5] च राज्यस्थानाधिपत्यवान् ॥ २०३५ ॥

पश्चाद्राजप्रसादेन [6]ह्यमात्यप्रियवान् सुखी ।
वनान्तरप्रसुद्वारे प्रबलोद्योगभाग्यवान् ॥ २०३६ ॥

रानरक्षणसंयुक्तो द्रव्यार्जनसमर्थकः ।
राजद्वारे सुकीर्तिश्च [7]ह्यन्यायार्जितवित्तवान् ॥ २०३७ ॥

सात्त्विकप्रियवान् रागी शिवकैङ्कर्यधर्मवान् ।
[8]पतितान्यजनस्नेही तन्मूलाद्धनलाभवान् ॥ २०३८ ॥

महानदीशिवक्षेत्रे तटाकोद्यानधर्म[9]कृत् ।
भिन्नालयप्रति[10]ष्ठाता देवब्राह्मणपोषकः ॥ २०३९ ॥

पापद्रव्यवशाद्धर्मं [11]पिता तस्य करोति च ।
मेषे कुजयुते मन्दे गुरुणा च निरीक्षिते ॥ २०४० ॥

स्वपिता छन्नपापी स्याद्बाधके धर्मवान् सुधीः ।
रहस्यधर्मवान् दाता कुटिलांशे प्रजायते ॥ २०४१ ॥

मध्यखण्डे फलं सत्यं सोदरभ्रातृशोकवान् ।
पञ्चमाब्दात् परं सौख्यं वसुवर्षात् परं प्रियम् ॥ २०४२ ॥

---

1. मध्यखण्डस्य जातके
2. पत्यं स्यात्
3. कुटिलांशस्य जनकः शिष्यांशे
4. प्रियम्
5. कारः स्यादायस्य
6. अमात्यप्रियवान्
7. अन्यायार्जित
8. पतितान्यजनस्नेहं
9. धर्मवान्
10. प्रतिष्ठ
11. कुटिलांशे पितुर्भवेत्

कुटिलांशे सिंहलमे दशवर्षात् परं [1]पिता ।
अतीव सौख्यमाप्नोति सम्पद्दाये सुवाहनम् ॥ २०४३ ॥

योगे द्वादशवर्षाणि [2]ह्यतीव श्रीयुतः पिता ।
क्ष्माधिपदशाकाले द्वाविंशाब्दात् परं यदि ॥ २०४४ ॥

पितामहस्य निर्याणं पञ्चविंशतिमध्यमे ।
जन्मदाये धृवे मन्दे यवनप्रभुनाशनम् ॥ २०४५ ॥

काञ्चीपिनाकिनी मध्य[3]देशे राजान्तरं भवेत् ।
वायव्यां दिशमाश्रित्य कलहः[4] समुपैष्यति ॥ २०४६ ॥

[5]तद्देशाधिपतेः सौख्यं राजभ्रमणमादिशेत् ।
पाण्ड्यदेशे हरिद्रं स्याद्राज्याधिपतिविस्मृतिः ॥ २०४७ ॥

तद्भ्राता[6] प्रबलं चैति राज्यभ्रंशमतः परम् ।
पश्चिमां दिशमाश्रित्य कलहः[7] पाण्ड्यदेशके ॥ २०४८ ॥

अराज[8]कं च भवति म्लेच्छप्राबल्य[9]मश्नुते ।
पश्चात् पूर्व[10]नृपतिस्तु नष्टराज्यार्थलाभवान् ॥ २०४९ ॥

चोलपाण्ड्यपुराधीशौ [11]भीत्या च नाशसंयुतौ ।
[12]पिता सेवितनृपतिर्गजाश्वाम्बरलाभवान् ।. २०५० ॥

राजयोगाभिवृद्धिः स्यात् स्वपितुः[13] सौख्यमादिशेत् ।
दशवर्षात् परं चैव चोरुरे राज्य[14]विप्लवः ॥ २०५१ ॥

---

1. पितु.
2. अतीव प्रियवान् पितुः
3. मध्ये
4. कलहं
5. तद्देशाधिपतेः
6. तद्भ्रातु
7. कलहं
8. अराजकमिति प्रोक्तं
9. मादिशेत्
10. पूर्वस्य नृपते
11. भयक्षेमाराभीरयेत्
12 स्वपिता सेवान्नृपतिः
13 पिता
14 सेवकत्

अमात्यब्राह्मणक्लेशं म्लेच्छमूलादुपद्र[1]वम् ।
रिपुक्षोभवशा[2]च्चैव लोके दुर्भिक्षमादिशेत् ॥ २०५२ ॥
मेषे शनिस्थिते जातो द्वादशाब्दात् परं यदि ।
लोके दुर्भिक्षमाप्नोति प्रजाक्षोभं विनिर्दिशेत् ॥ २०५३ ॥
मीनान्ते वृश्चिकान्ते च युग्मे[3] सिंहे च मध्यमे ।
[4]यावत् स्थितौ मन्दजीवौ तावद्दुर्भिक्षमादिशेत् ॥ २०५४ ॥
स्माद्भाग्यं गते मन्दे भूसुतेन समन्विते ।
स्वपमोक्ष महाक्रोध[5]स्तृतीयांशे प्रकीर्तितः ॥ २०५५ ॥
जन्मदाये स्वनृपति[6]राज्ये कलहमादिशेत् ।
पश्चा[7]च्छाम्यति कलहो राजासन्तानमश्नुते । २०५६ ॥
तत्काले पितृसौख्यं स्यात् पश्चात् प्राबल्ययोगवान् ।
द्वादशाब्दात् परं लोके धान्यनाश[8]श्चिवत्सरम् ॥ २०५७ ॥
प्रजाक्षो[9]भश्च भवति देशे राजान्तरं भवेत् ।
सम्पत्तारदशाकाले जनकस्य महत् सुखम् ॥ २०५८ ॥
राजयोगं [10]च लभते राजामात्यप्रसादवान् ।
एवंभूतोऽस्य जनकः सप्तविंशात् परं [11]मृतिम् ॥ २०५९ ॥
यदि जीवति पुण्येन द्वात्रिंशे पितृनाशनम् ।
[12]ततः पूर्वममात्यस्य नाशेन स्वपितृव्यथा ॥ २०६० ॥
पश्चाद्भा[13]ग्यसमायुक्तो राजपुत्रवशाद्भवेत् ।
पितृभ्रातृकलत्रस्थाने फलं विद्यात्प्रादिशेत् ॥ २०६१ ॥

---

1. उपद्रवः
2. प्रधानेति
3. युग्मसिंहे
4. यावत्तिष्ठन् गुरुः शौरी
5. क्रोधं
6. नृपति.
7. पश्चात् स्वयं प्रकुर्वीत राज्यसन्तानमादिशेत्
8. नाशं विवत्सरे
9. क्षोभं प्रकुर्वीत
10. प्रकुर्वीत
11. विपत्
12. तत्पूर्वं च अमात्यं च नाशं चेत्
13. भाग्यं प्रकुर्वीत

मातृशोकं विपद्दाये संधिकाले न संशयः ।
दशामार्गेषु विस्तारे भावुकस्य फलं वदेत् ॥ २०७१ ॥

स्मात्चतुर्थगे चन्द्रे सिंहलग्ने प्रजायते ।
सुतेशे शनिसंदृष्टे सन्तानप्रतिबन्धवान् ॥ २०७२ ॥

मीनांशगे तुलाजीवे शन्यङ्गारकवीक्षिते ।
कुटिलांशे प्रजावत्तु[1] पुरा ब्राह्मणशापवान् ॥ २०७३ ॥

तत्पापपरिहारार्थं सेतुस्नानं त्रिवार[2]कम् ।
अथवा [3]त्वेकवारेण कुटुम्बसहितः शुचिः ॥ २०७४ ॥

मासत्रयं वर्षमेकं [4]स्नानं च विधिवत् क्रमात् ।
सूर्योदयात् परं चैव शूद्रश्चेत् स्नान[5]माचरेत् ॥ २०७५ ॥

[6]कुर्यादर्धोदये विप्रस्त्रिमासं स्नानमुत्तमम् ।
काम्यार्थमेव[7] कर्तव्यमघहश्यया विधिक्रमात् ॥ २०७६ ॥

मोक्षार्थी प्रियवस्तूनि भोजनेषु विवर्जयेत् ।
पुत्रार्थी प्रत्यहं [8]कुर्याद्धरिवंशस्य[9] पाठनम् ॥ २०७७ ॥

शूद्रस्य[10] श्रवणं प्रोक्तं ब्राह्मणस्य [11]मुखेन च ।
मासान्ते [12]काम्यसुद्दिश्यव्यासपूजां[13] विधिक्रमात् ॥ २०७८ ॥

मासत्रयं[14] प्रदोषेषु निराहारो[15] शिवार्चनम् ।
इन्दुवारे विशे[16]षेण कल्पोक्तविधिना[17]गतः ॥ २०७९ ॥

---

1. प्रजातस्य
2. त्रिवारकृत्
3. एकवारस्य
4. स्नानदर्भ
5. कालकृत्
6. अर्धोदये भवेद्विप्रः शिमासे एव मासोति अथः
7. नेमं हरिवंश पठयन्तः
8. श्रावणमित्याहुः
9. सुतेषु च
10. विधिम्
11. पूजाविधि
12. मासत्रये
13. निरहारं शिवार्चितम्
14. विशेषे स्यात्
15. आचरेत्
16. अंशस्य अयके
17. भाषा

पश्चात् सन्तानमाप्नोति कुटिलांश[1]समुद्भवः ।
मृतप्रजाथवा [2]भार्या ज्येष्ठभार्या च पुत्रिणी ॥ २०८० ॥

पूर्वोक्तशान्तिकार्येण [3]ह्यल्पपुत्रवती भवेत् ।
तदभावे ज्येष्ठभार्या [4]पुत्रं न लभते ध्रुवम् ॥ २०८१ ॥

दारान्तरे सुतप्राप्तिः श्चत्वारिंशात् परं भवेत् ।
शन्यङ्गारकदोषार्थं [5]पृथ्वीलिङ्गं द्विमण्डलम् ॥ २०८२ ॥

[6]शताधिकसहस्रैश्च ब्राह्मणैस्तु प्रपूजयेत् ।
नमोऽ[7]न्तेन च मन्त्रेण शुद्धश्चेद्द्विषिवल्कमात् ॥ २०८३ ॥

वेदोक्तं निष्फलं [8]चैव न शास्त्रीयमिति स्मृतम् ।
दाराधिपे कुजयुते कुटिलांश[9]समुद्भवः ॥ २०८४ ॥

कलत्रद्वयमाप्नोति क्षेमदाये न संशयः ।
जन्मदाये जीवभुक्तौ सम्पद्दाये स्वभुक्तिषु ॥ २०८५ ॥

अथवा शुक्रभुक्तौ[10] तु प्रथमोद्वाहमादिशेत् ।
कुटिलांशे पूर्वभागे मध्य[11]खण्डे च जायते ॥ २०८६ ॥

वसन्तकाले [12]चोद्वाहं शुक्लपक्षे न संशयः ।
उत्तरांशे सिंहमासे [13]त्वथवा मिथुनेऽपि च ॥ २०८७ ॥

विवाहोत्सवमाप्नोति सम्पद्दाये न संशयः ।
पूर्वभागे [14]त्वादिखण्डे मिथुने च विवाहवान् ॥ २०८८ ॥

ग्रन्थान्तरे युग्ममासे मध्यखण्डे विवाहवान् ।
दारेशे कुजसंयुक्ते गुरुणा च निरीक्षिते ॥ २०८९ ॥

---

1. कुटिलांशस्य जातके
2. अल्पपुत्रवती
3. पूर्वोक्तशान्तिकर्माणि
4. पुत्रयोगं न निश्चये
5. पर्थिवंचेद्द्विमण्डलम्
6. द्विशताधिकसाहस्रै द्विजमुखात् प्रपूजयेत् ।
7. नमोन्तमिति
8. चेति
9. अंशस्य जातके
10. शुक्रभुक्तेषु
11. खण्डस्य जातके
12. उद्वाहं
13. अथवा मिथुनेषु च
14. आदिखण्डे

सिंहलग्ने प्रजातस्य दारप्रीतिः क्वचित् क्वचित् ।
चन्द्रे राहुयुते दृष्टे वेश्यास्त्रीभोगलोलुपः ॥ २०९० ॥

स्थिरराशिगते चन्द्रे शन्यङ्गारकवीक्षिते ।
परस्त्रीगमनार्थं च स्वगेहे चौर्यकृत्यवान् ॥ २०९१ ॥

स्वपितुः[1] कोपमूलेन देशमन्यं प्रपद्यते ।
पश्चात् स्वदेशमा[2]याति सम्पद्यते [3]त्विदं फलम् ॥ २०९२ ॥

विदेशसञ्चार[4]स्वभावशीलः
स्थिरे[5] शशाङ्के शनिभौमदृष्टे ।
अकृत्यकार्याणि [6]बहूनि कृत्वा
बाल्ये [7]विदेशात् पुनरागतश्च ॥ २०९३ ॥

स्थिरराश्यंशगे चन्द्रे पापद्वयनिरीक्षिते ।
[8]कृत्वा च दूरयात्रां तु शीघ्रं चैवागमिष्यति ॥ २०९४ ॥

कुटिलांशे पूर्वभागे [9]जातस्य मध्यखण्डके ।
श्यामवर्णकलत्रं स्याद्भर्तृप्रियवती भवेत् ॥ २०९५ ॥

भार्या गुणवती श्यामा भ्रातृभ्रात्रीसमन्विता ।
पुत्रविघ्नवती चैव [10]त्वेकभ्रातृसमन्विता ॥ २०९६ ॥

मध्यान्तरे [11]भ्रातरौ द्वौ भवेतां च न संशयः ।
[12]तयोरेकश्चिरायुष्मान् जातस्य कुटिलांशके ॥ २०९७ ॥

---

1. स्वपिता
2. आयाच
3. इदं
4. प्रथममेति
5. स्थिते
6. बहुत्वमेति
7. विदेशंपुनरागमश्च
8. दूरयात्रासु सिध्यन्ति समीपे पुनरागमम्
9. मध्यखण्डस्य जातके
10. एकभ्रातृ
11. द्वयं चेति स्वदारभ्रातृमादिशेत्
12. दीर्घायुष्येकमित्याहुः कुटिलांशस्य जातके ।

दारान्तरे साल[1]काश्च द्विलिसङ्ख्याश्चिरायुषाः ।
[2]सालकानां तु सङ्ख्याश्च कारकाष्टकवर्गगे ॥ २०९८ ॥

सालकस्य फलं चैव विस्तारं मनुरब्रवीत् ।
द्विकलत्रं चिरायुष्यं कुटिलांशस्य जातके ॥ २०९९ ॥

पश्चान्तरे क्षेमदाये पञ्चाशद्वत्सरात् परम् ।
ज्येष्ठमार्यां मृतिं [3]चैति मध्यखण्डोद्भवस्य च ॥ २१०० ॥

पूर्वभागे तृतीयांशे विपद्दाये दशान्त्यगे ।
मध्ये वा ज्येष्ठमार्यायाः सन्तानोत्पविनाश[4]नम् ॥ २१०१ ॥

उत्तरार्धे प्रजातस्य विंशाब्दे दारनाशनम् ।
[5]विरोधं फलत्रभावे कुटिलांशसमुद्भवः ॥ २१०२ ॥

सिंहे विलग्ने कुटिलांशजातो
दारिद्र्यगेहे च विवाहसिद्धिम्[6] ।
दारान्तरे पुत्रसुदीर्घमाहुः
श्रीमान् धनाढ्यः स्वपितुः समः स्यात् ॥ २१०३ ॥

—: * :—

## वृश्चिकलग्ने ब्रह्मांशः

समांशे वृश्चिके लग्ने ब्रह्मांशे [7]च प्रजायते ।
विप्रजन्मा सुखी नित्यं सीम[8]न्ततनयः स्मृतः ॥ २१०४ ॥

1. सालकस्य द्विलिसङ्ख्याचिरायुषम्
2. राजसोदरसङ्ख्यानि
3. चिन्त्यान्मध्य खण्डस्य जातके
4. नाशनम्
5. विरोधत्वमिति प्राहु. कुटिलांशस्य जातके
6. विवाहसिद्धि·
7. योगशतके
8. सीमन्ते विप्रजतयम्

समांशगे वृश्चिकलग्ननाथे
केन्द्रत्रिकोणे गुरुवीक्षि[1]तेवा ।
भाग्याधिपे स्वोच्चगते बलाढ्ये
ब्राह्मांशयोगे मुनयो वदन्ति ॥ २१०५ ॥

सिंहे मेषांशगे भौमे समे ब्राह्मांशयोगगे ।
पूर्वभागे प्रजातश्च[2] रक्तवर्णशुभाकृतिः ॥ २१०६ ॥

समांशगे पूर्वभागे [3]लग्ने च वृश्चिके तथा ।
महाशिवालयक्षेत्रे नगरे चाग्रहारके ॥ २१०७ ॥

पूर्वपश्चिमवी[4]थ्योश्च [5]दक्षिणस्यां प्रजायते ।
समांशगे ब्राह्मयोगे सुखेशे गुरुसंयुते ॥ २१०८ ॥

महादेवप्रसादेन नगरे प्रसवं स्मृतम् ।
समांशगे ब्राह्मयोगे सुत्तरे [6]च प्रजायते ॥ २१०९ ॥

अग्रहारे प्रसूतिश्च [7]गर्भे च पञ्चमोद्भवः ।
सप्तमे पञ्चमे [8]वापि नवमे ब्रह्मयोगगे ॥ २११० ॥

जननं सौख्यमित्याहुः पश्चाद्भ्रातृविहीनवान् ।
समांशगे ब्रह्मयोगे पूर्वभागे[9] च जायते ॥ २१११ ॥

पश्चाद्भ्रातृत्रयं चेति भगिनीद्वयवान् सुखी ।
तृतीयसोदरभ्रातुर्जातिमात्रे मृतिं वदेत् ॥ २१११ ॥

कनिष्ठ[10]भ्राता दीर्घायुर्मध्ये चिरश्रमं [11]लभेत् ।
समांशगे पूर्वभागे तृतीये केतु[12]संस्थिते ॥ २११२ ॥

---

1. वीक्षितस्य
2. प्रजातस्य
3. वृश्चिके लग्नजातके
4. वीथीषु दक्षिणे भागजातकम्
5. भागजातके
6. उत्तरेभागजातके
7. पञ्चम
8. गर्भे
9. भागस्य
10. भ्रातृ
11. वदेत्
12. केतुजातके

पश्चात् सहोदरभ्रातृभार्या पुत्रवती शठा ।
भाग्येशे केन्द्रभा[1]वस्थे सर्वानुयुग्वीक्षिते ॥ २११४ ॥

सहोदरभ्रातृभार्या काचिद्दुश्चरितप्रिया ।
कन्यांशे वृश्चिके लग्ने भाग्ये [2]राहौ प्रजायते ॥ २११५ ॥

सहोदरभ्रातृभार्या श्वश्रूश्वशुरदूषिणी ।
एका वन्ध्यात्वमाप्नोति पतिभक्तिविवर्जिता ॥ २११६ ॥

एका शरीरदो[3]षापि पुत्रद्वयसुपूजिता[4] ।
पुत्रिकाद्वयसंयुक्ता गर्भस्रावेण कर्शिता ॥ २११७ ॥

भ्रात्रीभ्रातृप्रियवती मध्ये क्लेशेन कर्शिता ।
समांशे वृश्चिके लग्ने मकरे केतुसंस्थिते ॥ २११८ ॥

कामेशे कुजसंदृष्टे वेश्यास्त्रीसङ्गपापवान् ।
समांशगे पूर्वभागे वेदाध्यायी सहोदरः ॥ २११९ ॥

एको वन्ध्यापति[5]श्चैव अपरस्तु त्रिभार्यकः ।
भ्रातृत्रयकनिष्ठश्च[6] भार्याव्यसनतत्परः ॥ २१२० ॥

मूढात्मा याचकः कोपी [7]क्लेशपथान्नजीवकः[8] ।
स्वगृहार्जितवान् किंचिद्भ्रातृमूलाद्धनाढ्यवान् ॥ २१२१ ॥

मध्ये भ्रातृविरोधेन[9] विभागानन्तरं व्ययम् ।
देशान्तरे वासमेति अल्पसौख्ययुतो भवेत्[10] ॥ २१२२ ॥

ततः पश्चाद्भ्रातृपीडा स्वगृहद्वारे[11] निवासवान् ।
व्यवसायपरो नित्यं वैदिकस्मार्तजीवकः[12] ॥ २१२३ ॥

---

1. भागस्थे
2. राहु
3. दोषस्य
4. सुपूजितम्
5. पतिश्चैकः कश्चित् त्रिभार्यकान्
6. कनिष्ठस्य
7. क्लेश
8. जीवनम्
9. भ्रातृविरोधं वा
10. अल्पसौख्यं विनिर्दिशेत्
11. भगद्वारे
12. जीवनम्

ततः पश्चाद्भ्रातृफलं [1]जन्मप्रभृति पापवान् ।
दुष्टस्त्रीनायकः कोपी कार्यसाहसवान् सुखी ॥ २१२४ ॥

डम्भाचाररतो नित्यं भ्रातृद्रोहादपुत्रकः ।
भ्रातृविश्वासरहितो [2]ह्यन्तःकपटपापवान् ॥ २१२५ ॥

याचकावृत्तिं कुरुते[3] नानाजातिगृहे गृहे ।
भ्रातृद्वयं फलं चेति[4], मध्ये [5]ह्युन्मादरोगवान् ॥ २१२६ ॥

भाग्ये [6]राहौ मजातस्य द्वितीये [7]रविसंयुते ।
समांशे सोदरभ्राता[8] हीनवृत्त्याच [9]जीवति ॥ २१२७ ॥

पुरा पापस्य दोषेण त्वेकः[10] पुत्रविहीनवान् ।
मुक्तोन्मत्तविकारी च स्वदेहात्मादिविघ्नकः[11] ॥ २१२८ ॥

अन्तःक्रोधी प्रसन्नात्मा साधुवद्दुष्टकृत्यवान् ।
समांशगे पूर्वभागे [12]स्थिरलग्नोद्भवस्य च ॥ २१२९ ॥

स्वज्येष्ठभ्रातृमूलेन भाग्यं भ्रातृत्रयं भवेत्[13] ।
कालान्तरे भ्रातृवैरमन्योन्यं च भविष्यति[14] ॥ २१३० ॥

द्वेषेण क्लेशमाप्नोति देशत्यागं विनिर्दिशेत् ।
भ्रातृभावफलाध्याये भगिनीलक्षणं स्मृतम् ॥ २१३१ ॥

सहोदरभ्रातृफलं प्रोक्तं विस्तारमेव च[15] ।
समांशे भगिनी चैव बहुकालं सुमङ्गली ॥ २१३२ ॥

---

1. राहु
2. अन्तः
3. याचकावृत्तिमित्याहुः
4. भ्रातृद्वयं फलं चेति
5. उन्माद
6. राहु
7. राहुजातके
8. भ्रातृ
9. जीवते
10. ह्येकः
11. विकारश्च स्वदेहात्मादि
12. स्थिरलग्नस्य जातके
13. त्रिशुः
14. भ्रातृवैरमन्योन्यस्य परस्परम्
15. विस्तारमिति चादिशेत्

पुत्रशोकवती चैव [1]स्वेका क्लेशेन कर्शिता ।
कर्मे भौमे सुखे राहौ स्थिरलग्नोद्भवस्य च[2] ॥ २१३३ ॥

सहोदरी क्लेशमेति पुत्रशोकवती स्मृता ।
सहोदरीसुतः कश्चित् पुरा पापस्य हेतुना ॥ २१३४ ॥

ब्रह्मचर्याश्रमे बाल्ये [3]चोन्मादेन मरिष्यति ।
समांशे भगिनीपुत्रो वंशे पापस्य हेतुना ॥ २१३५ ॥

अतीव क्लेशदारिद्र्यमुन्मादं लभते ध्रुवम्[4] ।
समांशे चोत्तरे भागे [5]कीटलग्नोद्भवस्य च ॥ २१३६ ॥

सर्वज्येष्ठः सुखी भ्राता वेदाध्ययनशास्त्रवित् ।
तस्य भार्या च कुलटा [6]सन्यासिप्रियभोगिनी ॥ २१३७ ॥

सहोदरमातृभार्या यतिमूलात् सुमापिता ।
उत्तरांशे फलं सत्यं ज्येष्ठभार्या पतिव्रता ॥ २१३८ ॥

समांशे चोत्तरे भागे नवमे राहुसंस्थिते[7] ।
[8]भ्रातरौ द्वौ चायुष्मन्तावग्रहारे निवासवान् ॥ २१३९ ॥

पुराणतत्वधर्मज्ञो ज्येष्ठभ्रातृप्रियः सुखी ।
उत्तरांशे फलं सत्यं भ्रमांशे च समुद्भवः[9] ॥ २१४० ॥

समे भ्रमयांशयोगेन शिवानुग्रहभक्तिमान् ।
रोमाङ्किततनुः प्राज्ञो [10]ह्यन्तरशुद्धः सधार्मिकः ॥ २१४१ ॥

साधुप्रियो देवभक्तः सुस्थिरो[11] नीतियुक्तिमान् ।
मल्पातकीर्तिमान् भोगी तामसप्रकृतिर्गुणी ॥ २१४२ ॥

---

1. एयक्लेशेन
2. स्थिरलग्नस्य जातके
3. उन्मादे मृतिमादिशेत्
4. मिति कथ्यते
5. वृश्चिके लग्नजातके
6. संन्यासप्रिय
7. राहुजातके
8. भ्रातृद्वयं चिरायुष्यम्
9. योगजातके
10. अन्तः शुद्धिः
11. सुस्थिरो

पापारमाकृशदेहश्च[1] चीजपान्त्ये सुलक्ष्मकः[2] ।
विधे मन्दे वक्रबुद्धिरमस्थामनगप्रियः ॥ २१४३ ॥

असत्यवाचकः कामी [3]अन्तश्शुद्ध· शुभान्वितः ।
पापांशे पापसन्दृष्टे पापी दुर्मार्गबुद्धिमान् ॥ २१४४ ॥

सत्यशौचविहीनश्च विधे मन्दे च जायते[4] ।
वृषमांशकगे मन्दे चापे गुरुसमन्विते ॥ २१४५ ॥

समांशे वृश्चिके लग्ने ज्योतिश्शास्त्रविशारदः ।
अलसः कीर्तिमान् कामी छन्नपापरतिप्रियः ॥ २१४६ ॥

विधे गुरुयुते मन्दे तेजस्वी धनधान्यवान् ।
अल्पाशी परदारेषु[5] बाल्ये क्लेशदरिद्रवान् ॥ २१४७ ॥

ब्राह्मयांशयोगे धर्मात्मा मनस्वी प्रियदर्शनः ।
शरीरदोषवान् किंचिन्मिताशी भ्रातृपोषकः ॥ २१४८ ॥

क्ष्मातृतीयगे मन्दे धनेकेतौ[6] प्रजायते ।
सुतेशे शनिसंयुक्ते किंचित्पावनवाक्यवान् ॥ २१४९ ॥

भृगौ[7] स्वोचेऽथवा भाग्ये दशमे भूमिनन्दने ।
सुराचार्येण संदृष्टे सुपुत्रः कुलदीपकः ॥ २१५० ॥

दशमाङ्गारको यस्य लग्ने वा सप्तमेऽपि वा[8] ।
न विमुञ्चति तं[9] लक्ष्मीर्लज्जाकुलवधूमिव ॥ २१५१ ॥

ब्राह्मयांशयोगे सौम्यांशे समांशे वा प्रजायते ।
लग्नात् त्रिकोणगे शुक्रे पुरा ब्राह्मणजन्मवान् ॥ २१५२ ॥

चन्द्रांशेऽथ सौम्यांशे समांशे च प्रजायते[10] ।
[11]भृगौ स्वोचे त्रिकोणे वा त्रिजन्मज्ञानबुद्धिमान् ॥ २१५३ ॥

---

1. देहस्य
2. सुलोचनम्
3. अन्तः शुद्धि
4. मन्दश्च जातके
5. परदारेभ्यः
6. धने केतु
7. भृगुः
8. सप्तमेव च
9. या लक्ष्मी
10. समांशश्चैव जातके
11. भृगुः

सुखेशे भृगुसंयुक्ते पञ्चमस्थेच जायते[1] ।
समांशगे पूर्वभागे ज्योतिश्शास्त्रप्रवीणकः[2] ॥ २१५४ ॥

शिवपूजाप्रभावेण दैवानुग्रहहेतुना ।
फलभावे प्रवीणश्च जातकस्कन्धनैपुणः ॥ २१५५ ॥

चातुर्वर्ण्यमताचारे[3] तत्त्वनिष्कर्ष बुद्धिमान् ।
महादेवप्रसादेन कालज्ञानयुत स्सुखी[4] ॥ २१५६ ॥

लग्नात् त्रिकोणगे शुक्रे चन्द्रे पापविवर्जिते ।
वित्ते जीवेऽथ वा षष्ठे सदानिर्मलचित्तवान् ॥ २१५७ ॥

एतद्योगे प्रजातश्च सदा दाक्षिण्यबुद्धिमान् ।
परोपकारवान् रागी लोके प्रख्यातिमान् सुखी ॥ २१५८ ॥

समांशगे घने जीवे वीक्षिते वा प्रजायते ।
शिवपूजारतो नित्यं प्रदोषव्रतपुण्यवान् ॥ २१५९ ॥

समांशे वृश्चिके लग्ने पूर्वभागे प्रजायते ।
कर्मे कुजे शुभे राहौ गङ्गास्नानादिपुण्यवान् ॥ २१६० ॥

कर्मेशे स्वोच्चराशिस्थे कर्मे भौमे शुभेक्षिते ।
गङ्गायात्राफलप्राप्तिः [5]भाग्ये च क्रतुकृत् सुखी ॥ २१६१ ॥

वेदान्तनिपुणश्चैव [6]ह्युत्तरांशसमुद्भवः ।
अग्निष्टोमादि[7]कार्येषु सिद्धिर्भवति नित्यश. ॥ २१६२ ॥

गङ्गास्नायी पूर्वभागे समांशे[8] च प्रजायते ।
ब्रह्मचर्याश्रमे बाल्ये भिक्षाशी क्लेश[9]मश्नुते ॥ २१६३ ॥

लग्ने कुजयुते दृष्टे दशमे पापखेचरे ।
जठरे वाम[10]भागे च स्वतिबाल्ये व्रणाङ्कितः ॥ २१६४ ॥

---

1. पञ्चमे भृगुनन्दने
2. प्रवीणवान्
3. मताचारं
4. -प्रदः,सुखी
5. भावे क्रतुमान्
6. उत्तराशश्च जातके
7. कर्माणि
8. समांशश्चैव जातके
9. आदिशेत्
10. वामभागस्स

षष्ठभावे यौवनेषु मनोपद्रवमादिशेत् ।
आस्यरोगेण सन्तापं वार्धके वा न संशयः ॥ २१६५ ॥

स्वारूढ[1]गते चन्द्रे स्वर्भानुयुतवीक्षिते ।
आरूढाष्टमगे पापे योगः [2]केमिद्रुमो भवेत् ॥ २१६६ ॥

[3]योगे केमिद्रुमे जातः क्लेशी याचकजीवकः ।
फलकालपरित्यागी नानादेशेषु संचरन् ॥ २१६७ ॥

आरूढे स्वोच्चगे चन्द्रे यत्किं[4]चिद्धनलाभवान् ।
तदष्टमगते जीवे वस्त्रवाहनधान्यवान् ॥ २१६८ ॥

उत्तरार्धे सुसम्पन्नो बहुक्षेत्रा[5]धिपः सुखी ।
[6]केमिद्रुमफलं विन्द्यात् पूर्वभागे क्वचित् क्वचित् ॥ २१६९ ॥

स्वोच्चे नीचांशगे सूर्ये [7]कीटलग्नसमुद्भवः ।
राजयोगशतं [8]चेति समांशे [9]तु न योगवान् ॥ २१७० ॥

क्लेशजीवनवान्नित्यं समांशे पूर्वभागके[10] ।
[11]गङ्गास्नानजपुण्येन शिवभक्तिरतो भवेत् ॥ २१७१ ॥

समांशे चोत्तरे भागे बहिराचारडाम्भिकः ।
अनेकक्रतुमान् रागी ग्रामद्रव्यापहारवान् ॥ २१७२ ॥

समांशे पञ्चमाधीशे असितेन समन्विते ।
पूर्वभागे प्रजातश्च[12] स्वपितामहभाग्यवान् ॥ २१७३ ॥

---

1. पदे
2. केमुद्रवे
3. केमुद्रयोगे जननं क्लेशयाचकजीवनम् ।
4. यत्किंचधन
5. क्षेत्रायवान्
6. इति केमुद्रकं
7. वृश्चिके लग्नजातके
8. चेति
9. अवयोगवान्
10. भागगे
11. गङ्गास्नानं महद्भाग्यं योगं चेच्छिवभक्तिषु ।
12. ॰प्रजातस्य

दारारि[1]ष्टेन दुःखी च नानादेशेषु संचरन् ।
विपत्नीविधवासङ्गी[2] गङ्गायाने मरिष्यति ॥ २१७४ ॥

पितामहाधिपे जीवे स्वर्क्षे वर्गोत्तमांशगे ।
असितेन युते श्रीमान् महाराजपुरोहितः ॥ २१७५ ॥

देहान्ते नरकं याति पौत्रमूलात् सुलोकवान् ।
पितृस्थानाधिपे चन्द्रे स्वोच्चे पापविवर्जिते ॥ २१७६ ॥

स्वपिता धार्मिकः साधुरेकदाररतः सुखी ।
समांशे नवमे [3]राहौ स्वपिता स्वभुजार्जितः[4] ॥ २१७७ ॥

ज्योतिश्शास्त्रे प्रसि[5]द्धश्च ह्यल्पजीवनवान् सुखी ।
पितामही मृत्युकाले स्वपिता सोदरद्वयी ॥ २१७८ ॥

[6]शुक्रवारे मृतिं चैति सजीवा प्रपितामही ।
[7]*पुण्येन प्रपितामह्याः समांशे जनकस्य च ॥ २१७९ ॥*

जीवने सौख्यमित्याहु[8]रेकाकी स्वपिता सुखी ।
विवाहानन्तरं सौख्यं राजामात्यप्रसादवान् ॥ २१८० ॥

द्विचत्वारिंशपर्यन्तं पुण्यक्षेत्रे वसिष्यति ।
पश्चाद्वनान्तरे वासं पुत्रमूलात् सुसौख्यवान् ॥ २१८१ ॥

पूर्वभागे पितृफलं [9]सूर्यनाड्यां च विस्तृतम् ।
उत्तरांशे पिता तस्य याचकश्च[10] पितामहः ॥ २१८२ ॥

केरलप्रान्त्यसञ्चारी[11] भारध्रुद्वृत्तिजीवकः[12] ।
पश्चात् स्वदेशमासाद्य [13]म्रियते पुत्रसन्निधौ ॥ २१८३ ॥

---

1. दारारिष्टफलं क्लेशं
2. विधवासङ्गगङ्गायाले
3. राहुः
4. आर्जितम्
5. प्रसिद्धिश्च अल्प
6. शुक्रवारे मृतिं चेति दीर्घायुः
7. प्रपितामहिपुण्येन
8. एकाकी
9. विस्तारं सूर्यनाडिषु
10. याचकः स्वपिता
11. सञ्चारं
12. जीवनम्
13. मृतिं चेत्

पितामही [1]दीर्घजीवा पुत्रत्रय[2]युता सती ।
पुत्रिका च तथा विन्द्या[3]ज्जातस्य चोत्तरांशके ॥ २१८४ ॥

समांशके पूर्वभागे दीर्घायुः स्वपितामही ।
उपनयनात् परं मृत्युः [4]पिता तस्याश्च कर्मकृत् ॥ २१८५ ॥

जन्मदा[5]ये दशान्त्यादौ संपदाये स्वभुक्तिषु ।
पितामह[6]श्च निर्याणं वृद्धे गोदावरीतटे ॥ २१८६ ॥

त्रिग्रहोघे प्रजातस्य नीचा[7]भावे च खेचरे ।
राजयोगफलं नास्ति फलौ गर्गमतं स्मृतम् ॥ २१८७ ॥

फलौ नीचग्रहाभावे निष्फलं स्वोच्चखेचरे ।
उच्चनीचौ राजयोगं नीचाभावे दरिद्रकः[8] ॥ २१८८ ॥

विपदाये विदेशा[9]नामुत्तरां दिशमेष्यति ।
[10]मातामहीप्रसादेन स्वपिता सौख्य[11]मश्नुते ॥ २१८९ ॥

मातृस्थानाधिपे मन्दे चापे गुरुसमन्विते ।
मातृश्चैशयोगे जातस्य स्वमाता चिरजीविनी ॥ २१९० ॥

चन्द्रे यावत्कलानि[12] स्युस्तावन्मातृसहोदराः[13] ।
समांशगे पूर्वभागे मातुरुद्वययोगवान् ॥ २१९१ ॥

मातृष्वसा [14]काचिदेव ह्येकपुत्रसमन्विता ।
[15]समङ्गली मृतिं चैति मातामही[16] चिरायुषी ॥ २१९२ ॥

---

1. चिरायुष्यं
2. पुत्रे सुखी
3. विन्द्यादुत्तराशस्य जातके
4. स्वपिता तस्य कर्मवान्
5. जन्मदाये दशान्त्यादि
6. पितामहस्य नि(य)र्वाणं वृद्धः
7. भावस्य जातके
8. दरिद्रकृत्
9. देशानिमुत्तरां
10. मातामातृ
11. श्रादिशेत्
12. फलास्सन्ति
13. सहोदर.
14. एक एव एकपुत्र
15. सौमङ्गल्ये
16. मातामहि

समांशे मातुलश्चैको ग्रामणीर्ल्यवसायकः ।
एकोऽध्यायी स्मृतिज्ञश्च गोलकाश्रमजीवकः[1]॥ २१९३ ॥

समांशके पूर्वभागे [2]मातुलौ द्वौ च बाल्यके ।
भिक्षा[3]टनं च कुरुतो विवाहानन्तरं सुखम् ॥ २१९४ ॥

मातुलाधिपतौ भौमे मेषांशे गुरुवीक्षिते ।
[4]मातुलैकश्चिरायुष्मान् मातृनाशेन कर्शितः ॥ २१९५ ॥

मातुलौ[5] द्वौ पुत्रवन्तौ पुत्रिकाशोककर्शितौ[6] ।
[7]गार्हस्थ जीवनं [8]चैति वेदाध्यायी [9]च मातुलः ॥ २१९६ ॥

विप्लवेन विनिर्गत्य वनान्तरपुरे वसन् ।
वाणिज्ये शूद्रमूलेन डम्भाचार[10]धनार्जकः ॥ २१९७ ॥

समांशे माम्यगे राहौ व्ययेश[11]कुजवीक्षिते ।
पूर्वभागे मातुलस्य भार्या दुष्टचरित्रका ॥ २१९८ ॥

म्लेच्छाक्रान्तस्य कालेषु क्लेशं [12]प्राप्नोति विप्लवात् ।
मानभङ्गं मनस्तापं देशत्यागमतः परम् ॥ २१९९ ॥

पुत्रशोकेन सन्तापं भर्तृक्लेशेन कर्शिता[13]।
मातुलारूढगे मन्दे समांशे गुरुसंयुते ॥ २२०० ॥

पूर्वभागे मातुलस्य मृतिं चैवाश्रमान्तरे ।
ब्रह्मलोकप्राप्तिफल[14]उत्तराशे तथा भवेत् ॥ २२०१ ॥

भाग्ये [15]राहौ तदीशे च सप्तमे स्त्रोचराशिगे।
शुक्रे कुजयुते दृष्टे त्रिभार्यो[16]ऽन्याङ्गनारतः ॥ २२०२ ॥

---

1. जीवना
2. स बाल्ये मातुलद्वयम्
3. भिक्षाशनं प्रकुर्वीत
4. मातुलस्यैकमायुष्यं
5. मातुलद्वौ
6. कर्शितः
7. गर्गस्य
8. जीवनंचेति
9. वेदाध्ययनमातुल
10. डम्भाचारे
11. व्ययेशो
12. विप्लवकालगे
13. कर्शितः
14. प्राप्तिरुत्तराशे
15. राहुतदीशस्य
16. त्रिभार्याण्यङ्गनारतः

स्वदारभगिनी [1]क्रिया विधवा दुश्चारिणी ।
तदभावे मातुलस्य भार्या पुत्री च वा यदि ॥ २२०३ ॥

विपद्धाये मध्यखण्डे तृतीयांशे विवाहवान् ।
विपद्धाये पूर्वखण्डे द्वित्रिवारं ज्वराद्भयम् ॥ २२०४ ॥

त्रयोदशेऽपमृत्युश्च मृतप्रायोऽपि जीवति ।
लग्नाद्धर्म्ये गते [2]राहौ सप्तमे चन्द्र[3]संस्थिते ॥ २२०५ ॥

विषू[4]चीज्वरभीत्या च मृतप्रायोऽपि जीवति ।
स रुद्रप्रमुखस्थानं विपद्धाये शुभाश्रयम् ॥ २२०६ ॥

वाहनाम्बरभूषाप्ति[5] धनलाभं [6]च विन्दति ।
वर्षद्वयं महत् कष्टं मनुवर्षात् परं व्ययाम् ॥ २२०७ ॥

देशान्तरे निवा[8]सेन स्वभुजार्जित[9]वित्तवान् ।
कन्याराशिस्थिते काले समांशे मनुनाशनम् ॥ २२०८ ॥

सत्रिकोणेऽथ वा चेति लोके दुर्भिक्षमादिशेत् ।
मुखराशिस्थिते काले स्वपि[10]त्रिष्टपूर्वके ॥ २२०९ ॥

विपत्तारदशासन्धौ[11] दारारिष्टं विनिर्दिशेत् ।
लग्नात् त्रिकोणगे शुक्रे दशमे कुज[12]संस्थिते ॥ २२१० ॥

स्वपि[13]तुर्मृतिकाले च देशान्तरनिवासवान् ।
सप्तविंशे विपद्धाये द्वितीयोद्वाहयोगवान् ॥ २२११ ॥

राजाश्रयं [14]च लभते मात्स्यमपि चादिशेत् ।
महाशिवालयक्षेत्रे विंशेऽब्दे पुण्यभूमिषु[15] ॥ २२१२ ॥

---

1. क्लेशं
2. राहुः
3. जातके
4. विषूचिज्वरगण्डं स्यात्
5. भूषाप्तिः
6. विनिर्दिशेत्
7. व्यथा
8. निवासं स्यात्
9. लाभवान्
10. स्वपितारिष्टपूर्वगे
11. दशासन्धि
12. जातके
13. स्वपितारिष्टतःकाले
14. प्रकुर्वीत प्राबल्यमिति
15. पुण्यभूमिगे

महायोगिप्रसादेन पार्थिवं[1] लिङ्गमर्चति ।
[2]पञ्चाक्षरस्य मन्त्रस्य ह्युपदेशयुत. सुखी ॥ २२१३ ॥
तस्य पुण्यप्रभावेण विश्वनाथकृतेषु च ।
यावद्बुद्धिर्ज्योतिषज्ञानं वृद्धिस्तस्य दिने दिने ॥ २२१४ ॥
समांशगे पूर्वभागे कर्मेशे गुरुवीक्षिते ।
भृगुलोके प्रजातस्य विद्याजीवनमादिशेत् ॥ २२१५ ॥
कुम्भे शनिस्थिते काले समांशे क्षेमदायगे ।
दारारिष्टमिति प्राहुस्तृतीयोद्वाहवान् सुखी ॥ २२१६ ॥
समांशे दशमे भौमे [3]राहौ च नवमे स्थिते ।
कश्चित् सहोदरभ्राता[4] कलत्रत्रययोगवान् ॥ २२१७ ॥
मत्स्यदाये सूर्यभुक्तौ सोदरारिष्टशोकवान् ।
शुक्रभुक्तौ विवा[5]हश्च ज्वरपीडा कचित् कचित् ॥ २२१८ ॥
सर्वदाये सौम्यभुक्तौ समांशे पूर्वभागगे ।
नूरमासे ज्वरं [6]चैति क्षिप्रेणारोग्यभाग्यवान् ॥ २२१९ ॥
समांशे चन्द्रनाडीषु [7]नाड्यां सूत्वाधिपस्य च ।
[8]विस्तारेण फलं वक्ष्ये देशकालादिसंभवम् ॥ २२२० ॥
व्ययेशे पञ्चमस्थाने सदीशे शनिसंयुते ।
दारान्तरसुतारिष्टं समांशे सूतिकागृहे ॥ २२२१ ॥
तृतीयदारे पुत्रातिर्दीर्घायुर्द्वयपुत्रवान् ।
पूर्वभागे [9]त्वेकपुत्रो ह्यायुष्मत्यपि पुत्रिका ॥ २२२२ ॥

---

1. पार्थिवारम्भपूजवान्
2. पञ्चाक्षरस्य च उपदेशप्रद
3. नवमे राहुसंयुते
4. भ्रातृमहा
5. विवाहे स्यात्
6. चेति
7. सुताधिपतिनाडिके
8. फलं विस्तरमाप्नोति देशकालादिसम्भवम् ।
9. भागेऽद्युत स्यात् पुत्रिकात्रयमायुतम्

प्रत्यब्दाये धनप्राप्तिर्विद्याप्राबल्यहेतुना ।
स शूद्राश्रमसन्माने प्राबल्यं चोत्तरोत्तरम् ॥ २२२३ ॥
समांशगे पूर्वभागे पूर्वज[1]न्मनि मित्रवान् ।
इह जन्मनि मैत्री च पश्चाज्ज[2]न्मनि मित्रवान् ॥ २२२४ ॥
ऋणानुबन्धमाप्नोति समांशे पूर्वमित्रवान् ।
चन्द्रांशगे तत्त्रिकोणे सूर्यराशित्रिकोणगे ॥ २२२५ ॥
समांशे मित्रनक्षत्रं पूर्वजन्मा[3]नुसारतः ।
देहान्तरे पुण्यभूमौ ब्रह्मावर्तनदेशके[4] ॥ २२२६ ॥
तावुभौ जननं [5]चेतो वेदान्ताभ्यास[6]संयुतौ ।
चापे शनिस्थिते काले प्रत्यक्तारदशान्त्यगे ॥ २२२७ ॥
*मित्रशत्रुविनाशादिक्लेशं प्राप्नोति भूरिशः ।*
सुतेशांशे पुत्रभावे लग्नाधिपतिनाडिगे ॥ २२२८ ॥
इह जन्मफलं [7]चैव विस्तरेण तु कथ्यते ।
समांशगे पूर्वभागे सुतेशांशस्य नाडिगे ॥ २२२९ ॥
भविष्यज्जन्मसाफल्यं [8]विस्तरेण फलं तथा ।
चतुःपञ्चांशगे वर्षे [9]त्वेकपष्टिसमेऽथ वा ॥ २२३० ॥
समांशगे पूर्वभागे मातृनिर्याणमादिशेत् ।
लाभेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ॥ २२३१ ॥
समांशगे मातृपीडा मृत[10]प्राया
ऽपि जीवति ।
तुलाशनिस्थिते काले [11]ह्यतीव क्लेशमादिशेत् ॥ २२३२ ॥

---

1. जन्मनि
2. पश्चाज्जन्मविशेषतः
3. जन्मादिका क्रमात्
4. ब्रह्मवर्तनदेशगे
5. चेति
6. श्चादिशेत्
7. चेति विस्तारमिति चादिशेत्
8. फल विस्तारमादिशेत्
9. एकषष्टिवत्सरे
10. मृतप्रायेऽपि
11. ह्यतीव

कन्याशनौ मन्ददाये पुण्यदेशे सुभाग्यवान् ।
पुत्रोपनयनादीनि मित्रवर्गे महत्[1] सुखम् ॥ २२३३ ॥

लौकिकप्रसुमूलेन विशेषप्रबलं सुखम् ।
समांशगे पूर्वभागे साधनेशस्य दायगे ॥ २२३४ ॥

पञ्चषष्टिसमादूर्ध्वे वृषभायनगे गुरौ ।
शुक्रान्तरे गुरोर्दाये [2]त्वापत्संन्यासमश्नुते ॥ २२३५ ॥

पुण्यक्षेत्रे नदीप्रान्त्ये मध्याह्ने गुरुवासरे ।
ब्रह्मलोकं [3]च लभते क्षिप्रेण जननं स्मृतम् ॥ २२३६ ॥

—: * :—

## मिथुनलग्ने इन्द्रांशः

इन्द्रांशे चोत्तरे भागे शुभलग्ने प्रजायते ।
शूद्रजन्मा[4] सुखी नित्यं [5]गर्भे च सप्तमो भवेत् ॥ २२३७ ॥

अथ वा षष्ठ[6] इत्याहुस्त्वष्टमो वा प्रसूतिमान् ।
पश्चात् सहोदरो[7] नास्ति ज्येष्ठभ्रातृ[8]समन्वितः ॥ २२३८ ॥

भगिनी च तथा विन्द्यान्नदीप्रान्ते प्रजायते ।
पुण्यक्षेत्रे नदीप्रान्त्ये मध्याह्ने जननं स्मृतम् ॥ २२३९ ॥

बाल्ये पितृविनाशः[9] स्याज्जननी चिरजीविनी ।
पूर्वभागे वनप्रान्त्ये देवालयसमीपगे ॥ २२४० ॥

तृतीयागर्भे[10]संजातः पश्चाद्भ्रातृसमन्वितः ।
केन्द्रत्रिकोणगे मन्दे स्वांशे पूर्णबलान्विते ॥ २२४१ ॥

---

1. महा सुखम्
2. आपत्संन्यासमाप्नुयात्
3. प्रकुर्वीत
4. शूद्रजन्म
5. षष्ठे गर्भजातकम्
6. षष्ठमित्याहुरष्टमेव
7. सहोदरानापि
8. हीयोर्गुणः
9. विनाशं
10. जनने

नीलवर्णशरी[1]रश्च बाल्ये सौख्यविहीनवान् ।
चन्द्रांशयोग इन्द्रांशे पूर्वभाग[2]समुद्भवः ॥ २२४२ ॥
राजयोगं [3]च लभते पश्चाद्भ्रातृवशात् सुखम् ।
उत्तरांशे वैश्यवृ[4]त्त्या धनं संपादयिष्यति ॥ २२४३ ॥
पूर्वभागे राजसेवी सचिवो दण्डनायकः ।
दशवर्षात् परं सौख्यं गृहे गोधनसङ्कुलम् ॥ २२४४ ॥
लक्ष्मीकटाक्षमित्याहु[5]र्जातस्य चोत्तरांशके ।
पूर्वभागे राज[6]योगी त्रिंशद्वर्षात् परं भवेत् ॥ २२४५ ॥
उत्तरांशे प्रजातस्तु[7] द्वितीयोद्वाहतः परम् ।
धनधान्यादिवृद्धिं च यावज्जीवं च सौख्यवान् ॥ २२४६ ॥
पुत्रत्रयस्य [8]संप्राप्तिः विशेषधनभाग्यवान् ।
त्रिंशोपरि महत् सौख्यं गृहे गोधनसंकुलम् ॥ २२४७ ॥
चन्द्रे शनियुते दृष्टे स्वकार्यनिरतः सुखी ।
ज्येष्ठभ्रातृविरो[9]धी च ह्यन्तःकपटवान् सुखी ॥ २२४८ ॥
शन्यङ्गारकसंदृष्टे चन्द्रे शुभविवर्जिते ।
किञ्चित्कालमनाचारी[10] सर्वदा पापचि[11]न्तवान् ॥ २२४९ ॥
पूर्वभागे [12]विशेषेण मित्रद्रोहं [13]नृपाद्भयम् ।
राजकार्यपरो नित्यं परवित्तापहारकः ॥ २२५० ॥
उत्तरांशे प्रजातस्तु[14] कोपी क्षिप्रप्रसादकः ।
सत्यव्रतवशान्नित्यं द्रव्यार्जनपरो भवेत् ॥ २२५१ ॥

---

1. शरीरं स्यात्
2. स्वजातके
3. प्रकुर्वीत
4. वृत्तिः धनसंपाद्य इत्यपि
5. उत्तरांशस्य जातके
6. राजयोगं
7. प्रजातस्य
8. चेति
9. विरोधं स्यादन्तः
10. अनाचारं
11. चिन्तवान्
12. विरोधं स्यात्
13. नृप....यम्
14. प्रजातस्य

शरीर[1]रोगवान् रागी रोगभार्यायुतः सुखी ।
प्रसिद्धगेहे [2]चोद्वाही सप्तद्वाये वनान्तरे ॥ २२५२ ॥

पूर्वभागे नदीप्रान्त्ये द्वादशाब्दे विवाहवान् ।
अवैदिकमतोत्साही सर्वाध्यक्षः स्वतन्त्रवान् ॥ २२५३ ॥

उत्तरांशे प्रजातस्य मनुवर्षात् परं सुखम् ।
[3]जन्मभूमेः सौम्यदिशि विवाहोत्सवसंभ्रमम् ॥ २२५४ ॥

पश्चान्तरे नारदीये वाक्यमेतद्वाह इत्यपि ।
इन्द्रांशे चोत्तरे भागे विवाहो[4] बहुसंभ्रमः[5] ॥ २२५५ ॥

दारेशे केतुसंयुक्ते गुरुणेन निरीक्षिते ।
दारवंशे [6]बरिष्टं स्यादुद्वाहानन्तरं सुखम् ॥ २२५६ ॥

चन्द्रांशे चोत्तरे भागे [7]विवाहे मृत्युभीतिमान् ।
सप्तद्वाये मृतिं [8]चैव स्वपीडारिष्टमादिशेत् ॥ २२५७ ॥

पूर्वभागे प्रजातस्य श्वशुरश्च चिरायुषः[9] ।
तद्भार्या[10]या विनाशश्च विवाहानन्तरं भवेत् ॥ २२५८ ॥

ग्रन्थान्तरे पूर्वभागे [11]चेन्द्रांशे तु समुद्भवः ।
स्वदारजननी भर्ता [12]तौ द्वौ दीर्घायुषौ स्मृतौ ॥ २२५९ ॥

इन्द्रांशे चोत्तरे भागे चोद्वाहात् पूर्वमेव च ।
उद्वाहानन्तरं [13]चापि दारवंशे जनक्षयः ॥ २२६० ॥

श्वशुराधिपतौ सूर्ये मित्रांशे बुधसंयुते ।
[14]स्मात् तृतीयगे शुभे श्वशुरश्चातिधार्मिकः ॥ २२६१ ॥

---

1. शरीरशो भवान्
2. उद्वाहे
3. विवाहोत्सवकार्याणि जन्मभूम्युत्तरां दिशि ।
4. विवाहे
5. संभ्रमम्
6. अरिष्टं
7. कालकूटविमृतिभयम्
8. चेति
9. चिरायुषम्
10. अरिष्टमिल्वन्तु:
11. इन्द्रांशश्चैव जातके
12. द्वयोर्दीर्घायुरस्तु तम्
13. चेति
14. लग्नतृतीयगे भागे श्वशुरस्यापि

बहुपुत्रयुतो मानी श्वशुर[1]श्चाल्पसोदरः[2] ।
बहुपुत्रार्थसंपन्नो [3]गुणवान् राजवल्लभः ॥ २२६२ ॥

वैदिकाचरधर्मात्मा बाल्ये क्लेशेन कर्शितः ।
मध्ये भाग्यसमृ[4]द्धश्च पश्चादाचार[5]तत्परः ॥ २२६३ ॥

स्यालकाधिपतौ मन्दे सिंहे चापनवांशगे ।
ऐन्द्रवांशे प्रजातश्च स्यालकस्य बहुत्ववान् ॥ २२६४ ॥

शुभांशगे भाग्यनाथे सुखेशे सप्तमांशके[6] ।
दारसोदरसङ्ख्या[7]श्च सप्त चैकादशस्तथा ॥ २२६५ ॥

इन्द्रांशे चोत्तरे भागे पञ्चमे राहुसंस्थिते ।
स्यालक[8]श्च महारोगी पुत्राभावे द्विभार्यवान् ॥ २२६६ ॥

स्याल[9]केषु च यः कश्चिद्बहुपुत्रार्थपुत्रिमान् ।
मन्दप्रकृतिर्दुष्टात्मा भ्रातृद्वेष[10]युतो भवेत् ॥ २२६७ ॥

[11]तेषामेको दुर्बलश्च पुत्रक्लेशेन कर्शितः ।
[12]वार्धिके पुत्रलाभे च मृतप्रजाबहुत्ववान् ॥ २२६८ ॥

विल[13]म्बेन सुतोत्पत्तिर्भार्या दोषादपुत्रवान् ।

मतान्तरे—

इन्द्रांशे चोत्तरे भागे स्वभार्या सोदरद्वया[14] ।
पुराकृत[15]महापापदोषेणामयशोकवान् ॥ २२६९ ॥

---

1. श्वशुरस्याल्पसोदरी
2. पुत्रवान्
3. पुत्रवान्
4. समृद्धिः स्यात्
5. निष्ठवान्
6. सप्तमांशगे
7. सङ्ख्यानि सप्तैकादशमादिशेत्
8. स्यालकस्य महद्रोगं
9. स्यालकस्य
10. भ्रातृद्वेषप्रदो
11. एकःकश्चिद्दुर्बलश्च
12. वार्धिके पुत्रसन्तानं
13. विलम्बन
14. सोदरद्वयम्
15. महत्पापं

वधपुत्रफलप्राप्ति[1]र्द्वयोः स्यालकयोर्भवेत् ।
[2]एकोऽल्पसुतवान् रोगी [3]बाल्ये दुष्टस्वभाववान् ॥ २२७० ॥
कालान्तरे चित्तशुद्धिर्धर्मात्मा स्यालकः स्मृतः ।

स्वदारवंशे बहुधर्मयुक्ते
लग्नात्तृतीये भृगुजे प्रजातः ।
ऐन्द्रांशनाड्यां[4] जनकस्य पापी
वा चारहीनो बहुभ्रातृमान् स्यात् ॥ २२७१ ॥

इन्द्रांशे चोत्तरे भागे स्वदारभगिनीद्वयम् ।
[5]तिस्रो वा दीर्घमाङ्गल्यं [6]तासामेका सुपुत्रिणी ॥ २२७२ ॥
स्वदारभगिनी [7]काचिद्बहुशः क्लेश[8]संयुता ।
वार्धके पुत्रमूलेन [9]काचित् सौख्यवती भवेत् ॥ २२७३ ॥
इन्द्रांशे चोत्तरे भागे युग्मल[10]ग्नोद्भवस्य च ।
स्वभार्याभगिनी [11]काचित् क्षेमदाये [12]त्वमङ्गली ।
क्षेमदाये [13]भोगयुता चेदमेव फलं विदुः ॥ २२७४ ॥
[14]स्यालकानामरिष्टं च मध्यखण्डादिवत्सरे ।
[15]यदि जीवन्ति पुण्येन ह्यायुष्मन्तस्तु स्यालकाः ॥ २२७५ ॥

*स्वदारवंशे बहु[16]शोऽप्यरिष्टं*
स्वस्याल[17]कादेश्च जनस्य दुःखम् ।

---

1. स्यालकद्वयमादिशेत्
2. एकाल्पसुतवान्
3. भावे
4. अंशनाडी
5. त्रयो
6. एका यद्यपि पुत्रिणी
7. कश्चित्
8. क्लेशकारिणी
9. कश्चित्
10. लग्नस्य जातके
11. कश्चित्
12. श्रमङ्गली
13. परार्थस्य इदमेव
14. पुर्याकारिष्टं...
15. यदि जीवति पुण्येन स्यालकत्रयमायुषः ।
16. बहुलादरिष्टं
17. स्यालकस्यादि

स्वबन्धुदायादफलं[1] करोति
हीन्द्रांशना[2]ड्यां भृगुबांशजस्य ॥ २२७६ ॥

जातकस्य मद्भ्रातरं क्षेमदाये सुखावहम् ।
धनधान्यसमृद्धिं[3] च स्वपुत्रोद्वाहमादिशेत् ॥ २२७७ ॥

तत्पूर्वे [4]जातकस्यापि विपदायान्त्यकालके[5] ।
द्वितीयोद्वाहमित्याहुः क्षेममुक्तौ[6] च वा यदि ॥ २२७८ ॥

इन्द्रांशे चोत्तरे भागे द्वितीयोद्वाहकन्यका ।
[7]दरिद्रवंशे चोत्पन्ना स्वल्पभ्रातृसमन्विता ॥ २२७९ ॥

द्वितीयभार्या जनकस्य पापी[8]
सहोदरभ्रातृविरोध[9]युक्ताम् ।
अल्पानुजां चेति [10]वदन्तितज्ज्ञा
द्वितीयभार्याभगिनी कुल[11]घ्नाम् ॥ २२८० ॥

द्वितीयभार्या भवनं नवमं [12]परिकीर्तितम् ।
तदीशे शुभराशिस्थे स्वांशे पापविवर्जिते ॥ २२८१ ॥

तस्मात् तृतीयगे शुक्रे [13]स्वसितेन युतेक्षिते ।
ज्येष्ठभार्या गुणवती पुत्रद्वयसमन्विता ॥ २२८२ ॥

महारोगवती चैव भ्रातृक्लेशवती सदा ।
कालान्तरे क्षेमदाये भर्तुः पूर्वं मरिष्यति ॥ २२८३ ॥

इन्द्रांशे चोत्तरे भागे ज्येष्ठपत्नी चतुःप्रजा ।
पुत्रद्वयं चिरायुष्यं [14]मुख्या भार्योत्तमोत्तमा ॥ २२८४ ॥

---

1. स्वश्चेत
2. भाडी भृगु ...धमाहुः
3. समृद्धिश्च
4. भृगुजांशेन
5. कालगे
6. क्षेमभुक्ते
7. दारिद्र्यवशामित्याहुरल्प
8. पापी
9. विरोधवान् स्यात्
10. मिति ब्रुवन्ति
11. कुलघ्ना
12. च मिति स्मृतम्
13. असितेन
14. एके

दारद्वयं [1]च लभते मातृवैरी विवादवान् ।
ज्येष्ठभार्याज्येष्ठपुत्र[2]स्त्विन्द्रांशे दैर्ध्यमायुषः २२८५ ॥

कालान्तरे केतुदोषात् [3]पुत्रौ यमलसंभवौ ।
ज्येष्ठभार्यासुतः कश्चित् कर्णवैकल्यवान् सुधीः ॥ २२८६ ॥

अक्षिरोगयुतश्चैव भ्रातृमूलेन सौख्यवान् ।
इन्द्रांशे चोत्तरे भागे युग्मल[4]मोद्भवस्य च ॥ २२८७ ॥

दारान्तरे सुतस्थाने वसिते शुभवर्जिते ।
सीमन्तपुत्रनाशः स्याद्दारान्तरफलं विदुः ॥ २२८८ ॥

दारान्तरे पञ्चसङ्ख्या सन्तानोत्पत्तिमादिशेत् ।
त्रिभजा दीर्घमायुष्यम् [5]इन्द्रांशजनितस्य च ॥ २२८९ ॥

काश्यपः—

दारान्तरे पुत्रसङ्ख्या वेदसङ्ख्या चिरायुषाः ।
पुत्रिकाद्वयमित्याहुः पुत्रयोगचतुष्टयम् । २२९० ॥

दारद्वये चोत्तरांशे कृत्तिकाऽऽक्षसङ्ख्यया ।
दृढसन्तानमाप्नोति हीन्द्रांशक[6]समुद्भवः ॥ २२९१ ॥

लग्नात् पञ्चमगे राहुरिन्द्रांशे च प्रजायते ।
एका पुत्री सुमाङ्गल्यमेका क्लेशेन कर्शिता ॥ २२९२ ॥

पुत्राभावे सुमाङ्गल्यं पुत्रयोगे[7] वितन्तुताम् ।
दारान्तरे सुतः कश्चित् पुष्पितान्यां[8] तु सप्तमी ॥ २२९३ ॥

कलत्रद्वयवान् पापी ज्ञातिद्वेषकलापवान् ।
[9]गुणी कश्चिद्गृहस्थश्च मेदमा[10]तृसुतप्रियः ॥ २२९४ ॥

---

1. प्रकुर्वीत
2. पुत्र इन्द्रांशे
3. यमल पुत्रवान् भवेत्
4. लग्नस्य जातके
5. इन्द्रांशश्चैव जातके
6. इन्द्रांशरचैव जातके
7. पुत्रयोगविदन्तु च
8. पुष्पितान्य समादिशेत्
9. एकः
10. मातृसुत

कालान्तरे वातरोगी[1] बहुसन्तानवान् भवेत् ।
इन्द्रांशे चोत्तरे भागे लाभेशे शुभवीक्षिते ॥ २२९५ ॥

लग्नात् पञ्चमगे पापे ज्येष्ठभ्रातृवियोगवान् ।
ज्येष्ठद्वयौ पुत्रव[2]न्ताविन्द्रांशे वनितस्य च ॥ २२९६ ॥

[3]शुनफादाये मध्यखण्डे भ्रातृशोक[4]युतो भवेत् ।
कुजभुक्त्यन्तमारभ्य राहुभु[5]क्त्यन्तमेव च ॥ २२९७ ॥

इन्द्रांशे चोत्तरे भागे भ्रातृनिर्याणमादिशेत् ।
एकाभ्रा[6]ता चिरायुष्मान् भगिन्येका [7]त्वमङ्गली ॥ २२९८ ॥

क्षेमदाये फलं सत्यं मध्यखण्डे न संशयः ।
इन्द्रांशे चोत्तरे भागे द्वे [8]भगिन्यौ च पुत्रिण्यौ ॥ २२९९ ॥

एका[9]दारिद्र्यमापन्ना त्वेका सौख्यवती भवेत् ।
भावाध्याये पूर्वभागे भगिनीफल[10]मुच्यते ॥ २३०० ॥

लग्नाच्चतुर्थगे भौमे राहु[11]युक्ते क्रियांशगे ।
स्वमाता विधवा भूत्वा बहुकालं सुजीवति ॥ २३०१ ॥

भ्रातृशोकवती चैव भ्रातृभात्रीसमन्विता ।
पुत्रमूलात् सुस[12]न्तुष्टा सदा रोषवती स्मृता ॥ २३०२ ॥

पुत्रशोकवती चैव वार्धके नात्र संशयः ।
इन्द्रांशे चोत्तरे-भागे भावाध्यायाष्टवर्गके[13] ॥ २३०३ ॥

[14]भौमाष्टके पितृव्यादिफलनिर्णय[15]मुच्यते ।
इन्द्रांशे चोत्तरे भागे भूसुतस्याष्टवर्गके[16] ॥ २३०४ ॥

---

1. वातरोगी
2. पुत्रवन्तौ विन्द्रांशश्च जातके
3. पाके शुक्रे
4. मदो
5. भुक्तौ भवेद्यदि
6. भ्रातृचिरायुर्म
7. त्वमङ्गली
8. पुत्रिणी भगिनी द्वयम्
9. दरिद्रमापन्नाएका
10. फलविस्तरम्
11. राहुपश्चे
12. सन्तोषी
13. वर्गगे
14. भौमे तुला
15. आदिशेत्
16. वर्गगे

शेष्यावशिष्टसङ्ख्याश्च[1] पितृव्याश्च चिरायुषाः ।
कुजांशरश्मिसङ्ख्या[2]श्च स्वपितुश्च सहोदराः ॥ २३०५ ॥
[3]भवेयुरिति च प्रोक्तमिन्द्रांशे जनितस्य च ।
दशामार्गे पितृव्यस्य [4]दशायुर्दायं च कथ्यते ॥ २३०६ ॥
इन्द्रांशे चोत्तरे भागे चन्द्रां[5]शयोगजस्य च ।
चत्वारिंशात् परे [6]चैव पुत्रोत्पत्तिर्भविष्यति ॥ २३०७ ॥
पञ्चमाधिपतौ शुक्रे लग्नारूढे प्रजायते ।
[7]लग्नात् त्रिकोणगे वापि दशायां प्रियमश्नुते ॥ २३०८ ॥
वर्षे वर्षे शुभाधिक्यं व्यापारे धनलाभवान् ।
वार्धके राजसन्मानं पुत्रमूलात् सुसौख्यवान् ॥ २३०९ ॥
स्वभुजार्जितसंपन्नो दारिद्र्यध्वंस[8]कोभवेत् ।
कन्याशनिस्थिते काले लोके दुर्भिक्ष[9]जं भयम् ॥ २३१० ॥
संपद्दाये शुक्रभुक्तौ जन्मदेशे प्रभोर्विपत् ।
तत्पुत्रप्रबलो[10] भूत्वा तद्राज्ये पालको[11] भवेत् ॥ २३११ ॥
त्रिंशोपरिशरैर्वर्षे चोलदेशे [12]प्रजाक्षयः ।

---

1. सङ्ख्यानि पितृव्यस्य स्थिरायुषम्
2. सङ्ख्यानि स्वपिता च सुहोदरम्
3 उत्पत्तिश्चमिति प्रोक्त इन्द्रांशश्चैव जातके ।
4. आयुर्दायमिति स्मृतम्
5 चन्द्रांशे योगजातके
6. चेति स्वपुत्रस्य विनिर्दिशेत्
7 लग्नारूढपदे शुक्रे
8. विद्यते
9. डाम्बरम्
10. प्रबलं चेति
11. इत्यपि
12. अरिष्टकृत्

## सिंहलग्ने मुद्गरांशः

सर्वांशे वृषभे सूर्ये राहुयुक्ते कुजेक्षिते ॥ २३१२ ॥

मुद्गरांशे [1]प्रजातस्य स्वपिता रोगदेहवान् ।
सर्वांशे वृषभे सूर्ये दुर्बलांशे कुजेक्षिते ।
स्वपिता कीर्तिमांश्चेति तटाकोद्यानधर्म[2]कृत् ॥ २३१३ ॥

स्वक्षेत्रगे भूमिसुते शुभांशे
सर्वांशगे भानुबलान्विते[3] च ।
श्रीमुद्गरांशे [4]च समुद्भवो यः
सहोदरभ्रातृविहीनभाक् स्यात् ॥ २६१४ ॥

मीनद्रेक्काणगे भौमे [5]चापांशे वृश्चिके तथा ।
सिंहलग्ने प्रजातश्च[6] सोदरभ्रातृहीनवान् ॥ २३१५ ॥

तुलाराशि स्थिते सूर्ये वृषभे [7]वा प्रजायते ।
कन्यंशगे प्रजातस्तु[8] ज्येष्ठभ्रातृसमन्वितः ॥ २३१६ ॥

सूर्यलग्ने [9]धने केतौ शुभद्वयनिरीक्षिते ।
स्वक्षेत्रगे कलानाथे मिथुनांशे पिता सुखी ॥ २३१७ ॥

कालेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ।
पिताम[10]होऽरिष्टमेति मासु मीनादिषु त्रिषु ॥ २३१८ ॥

चन्द्रांशगे तत्त्रिकोणे स्फुटयोगं गते शनौ ।
क्षपदाये मातृहानिः कन्यादित्रयमासगे ।
क्षेमाधिपदशाकाले चापान्ते मकरे शनौ ॥ २३१९ ॥

---

1. प्रजा चेति
2. धर्मवान्
3. बलान्वितस्य
4. प्रजमाकरोति
5. वृश्चिके चतुरांशगे
6. प्रजातस्य
7. कालजातके
8. प्रजातस्य
9. पदे
10. पितामहारिष्टमेति मीनादिषु मासगे

सर्वांशगे [1]पित्ररिष्टं मुक्तिक्षेत्रे न संशयः ।
सूर्यकालाष्टमे मन्दे दाये [2]तृतीयभागके ॥ २३२० ॥

सर्वांशके प्रजातश्च त्रिंशोपरि सुभाग्यवान् ।
मध्यखण्डे व्याकुलं स्यात् सीमन्तशिशुनाशनम् ।
विक्रमाधिपतौ शुक्रे शन्यङ्गारकवीक्षिते ॥ २३२१ ॥

विपद्दाये दारवंशे स्वदारजननी [3]मृता ।
[4]अपत्नीको श्वशुरश्च बहुकालं सुजीवति ॥ २३२२ ॥

वार्धके पुत्रशो[5]केन क्लेशं प्राप्नोति भूरिशः ।
स्वप्रावस्थं [6]च लभते पृथग्व्यापारसौख्यवान् ॥ २३२३ ॥

सर्वांशके विपद्दाये तृतीयांशे महत् सुखम् ।
कर्मे सर्वांशगे सूर्ये गुरुणा च निरीक्षिते ॥ २३२४ ॥

सत्कर्मी स्वपिता बाल्ये दारिद्र्येण च कर्शितः ।
[7]रोगेण पीडितो मध्ये प्रीतो धार्मिकवान् सुखी ॥ २३२५ ॥

मुद्गरांशे सूर्यना[8]ड्यां कथ्यते फलविस्तरम् ।
कालाधिपदशाकाले व्ययाधिपतिभुक्तिषु ॥ २३२६ ॥

[9]सर्वांशके प्रजातस्य युग्ममासे मृतिं वदेत् ।
तदभावे क्रूरमासे चन्द्रांशस्य[10] च मासके ॥ २३२७ ॥

कृष्णपक्षे [11]स्वरिष्टर्क्षे पुण्यक्षेत्रे मरिष्यति ।
व्ययेशारूढगे शुक्रे गुरुणा च निरीक्षिते ॥ २३२८ ॥

---

1. पितारिष्टं
2. तृतीयांशे
3. विपत्
4. श्वशुरस्य अपत्नीकं
5. शोकं स्यात्
6. प्रकुर्वीत
7. मध्ये रोगप्रपीडा स्यात् प्रीतिधार्मिकवान् सुखी ।
8. नाडिफलं विस्तारमादिशेत्
9. कर्मांशगे
10. चन्द्रांशश्चैव मासगे
11. अरिष्टं स्यात्

पापद्वयेन संदृष्टे पापं पुण्यं समं भवेत् ।
पुण्यलोके तथा त्रिंयाख्यभे [1]पापिनि संस्थिते ॥ २३२९ ॥

शूद्रज[2]न्मा भवेत् पश्चात् कर्मनक्षत्रभे [3]तथा ।
हरिणांशकगे सौम्ये लाभे त्रिग्रहसंयुते ॥ २३३० ॥

वित्ते [4]चन्द्रे प्रजातश्च हरिशङ्करभक्तिमान् ।
कुम्भांशे वृषभे सौम्ये मेषे [5]शुक्रे प्रजायते ॥ २३३१ ॥

अविश्वासपरो नित्यं मीने [6]केतौ च संस्थिते ।
विक्रमारूढगे जीवे वीक्षिते राहु[7]संयुते ॥ २३३२ ॥

हरिणांशकगे सौम्ये सत्यवादी दृढव्रतः ।
सर्वज्येष्ठानुजभ्रातृतन्मूलात् क्लेशभाग्भवान् ॥ २३३३ ॥

सत्पुत्रद्वेषबाहुल्यं लग्नत्रिंशात् परं वदेत् ।
व्ययेशे हरिणांशस्थे व्ययारूढे शुभग्रहे ॥ २३३४ ॥

[8]स्थिरलग्ने प्रजातस्य धर्ममूला[9]द्धनव्ययम् ।
सत्कुटुधर्मसिद्धिः स्याद् व्ययारूढे भृगुस्थिते[10] ॥ २३३५ ॥

हरिणांशकगे सौम्ये शिवपूजापर सुखी ।
तटाकोद्यान[11]निर्माता गृहक्षेत्रप्रदानवान् ॥ २३३६ ॥

देवब्राह्मणविश्वा[12]सी[?]विश्वासी क्वचित् कचित् ।
हरिणांशकगे भौमे कर्मे वित्तेशसंयुते ॥ २३३७ ॥

सूर्ये [13]सशुक्रे जातश्च सत्कर्माचारबुद्धिमान् ।
[14]मेषूणे दैत्यपूज्ये शुभांशे पाप[15]वीक्षिते ॥ २३३८ ॥

---

1. पापस्य जातके
2. शूद्रजन्म तथा
3. गिरे
4. चन्द्रप्रजातस्य
5. शुक्रप्रजायते
6. केतुश्च जातके
7. जायते
8. चिरलग्ने
9. धनव्ययम्
10. भृगुस्थिरे
11. धर्मात्मा
12 विश्वासम् अविश्वासे
13 शुक्रप्रजातस्य
14. मेषे
15. पापदृष्टिना

प्रसिद्ध[1]कार्येण भवेद्धनाढ्यो
सत्क[2]र्मकारी शिवपूजकश्च ।
[3]तदीश्वरे लाभगते बलाढ्ये
सत्यानृताद्यधिकुजीवक:[4] स्यात् ॥
पित्रादिसौख्यं मुनयो वदन्ति
स्वपुत्रमूलाधिक[5]भाग्यलाभम् ॥ २३३९ ॥

हरिणांशकगे सौम्ये देवता[6]कर्मकार्यवान् ।
अतीव सुकृती नित्यं देवब्राह्मणपोषकः ॥ २३४० ॥

हरिणांशकगे भौमे [7]त्वष्टाविंशात् परं सुखम् ।
स्वभावस्थं [8]च लभते पञ्चत्रिंशे सुभाग्यवान् ॥ २३४१ ॥

हरिणांशकगे भौमे मत्स्यद्रायेऽपराधगे ।
अतीव श्रियमाप्नोति षट्सहस्रधनाढ्यवान् ॥ २३४२ ॥

ग्रन्थान्तरे—

पञ्चत्रिंशात् परं भूरि धनं संपादयिष्यति ।
षट्छताधिकसाहस्रतद[9]र्धेन धनाढ्यवान् ॥ २३४३ ॥

हरिणांशकगे सौम्ये वित्ते चन्द्रे प्रजायते ।
तदीशे लाभराशिस्थे द्विसहस्रधनाढ्यवान् ॥ २३४४ ॥

सुतेशांशाधिपे मन्दे नीचांशे द्वन्द्वराशिगे ।
कालान्तरे स्वपुत्रस्य [10]कन्यके यमले तथा ॥ २३४५ ॥

---

1. कर्माणि
2. सत्कर्माचारशिवपूजभाक्
3. तदीशे
4. कुजीवनै
5. भाक् स्यात्
6. कर्यकार्यवान्
7. अष्टाविंशात्
8. प्रकुर्वीत
9. तदर्धं च
10. यमलं पुत्रिणी सुखी

हरिणांशकगे सौम्ये गङ्गा[1]याने च विन्नवान् ।
द्वित्रिवारं सेतुयात्रा [2]कृत्वा चेत् तत्फलं समम् ॥ २३४६ ॥

वित्ते चन्द्रे प्रजातस्तु[3] लाभे षष्ठे दिवाकरे ।
गङ्गास्नानफलं पुण्यं लभते नात्र संशयः ॥ २३४७ ॥

लग्नेशे शनिसंदृष्टे हरिणांशकगे बुधे ।
वेदोक्तयज्ञकर्मार्थिद्रव्य[4]दानरतो भवेत् ॥ २३४८ ॥

संकल्पपूर्वकं दानं यज्ञार्थं च प्रशस्यते ।
[5]कर्मान्ते च विशेषेण गोदानं तु फलाधिकम् ॥ २३४९ ॥

[6]दानं ब्रह्मोपदेशाय श्राद्धार्थं च तथैव च ।
मन.पूर्व[7]प्रदानेन दुर्गतिर्नात्र संशयः ॥ २३५० ॥

कर्मत्रयादि[8]यज्ञार्थे याचनं तु न दोषकृत् ।
[9]विप्रश्रेष्टस्य निकटे कलौ दोषो न विद्यते ॥ २३५१ ॥

हरिणांकगे सौम्ये स्वपिता सुकृती सुखी ।
स्वपितामहपुण्येन वंशे पुत्राभिवृ[10]द्धयः ॥ २३५२ ॥

हरिणांशकगे सौम्ये [11]जीवभौमार्कसंयुते ।
बाल्ये दुर्गा[12]श्रयं यज्ञं कृत्वा पुण्यफलः सुखी ॥ २३५३ ॥

हरिणांशकगे सौम्ये दशसङ्ख्याः सहोदराः ।
अथवा सोदराः सप्त [13]चत्वारस्तु चिरायुषः ॥ २३५४ ॥

---

1. गङ्गायाते च
2. सिद्धं चेत्तत्फलं भवेत्
3. प्रजातस्य
4. द्रव्यदेयप्रदो
5. मर्मान्तरे उपायेन गत्वा पुण्यफलाधिकम्
6. उपन॰ नं तथा विन्द्यात्
7. पूर्वभारमेति दुर्गती नाल
8. विज्ञार्थं याचक फलमुत्तमम्
9. श्रेष्ठविप्रकलायेन कलौ दोषं
10. पुत्राभिवृद्धिकृत्
11. रविजीवाभिसंयुते
12. दुर्गान्तरं यज्ञ पुण्यभागकसु सुखी ।
13. चतुस्सङ्ख्या

[1]माधुर्यात् समुत्पन्नबहुस्त्राहुविनशवान् ।
[2]आयुष्मती भगिन्येका बहुपुत्रवती भवेत् ॥ २३५५ ॥

[3]हरिणांकगते जीवे रवेकपुत्रयुतः सुखी ।
हस्तिकोणेऽथ वा विन्यासबहुपुत्रवान् ॥ २३५६ ॥

पुत्रद्वयं चिरायुष्यं हरिणां[4]कोद्भवस्य च ।
जीवजा भाग्य[5]वत्योऽपि पुत्रीपुत्रसमन्विताः ॥ २३५७ ॥

एका पुत्रविहीना स्यादेका क्लेशेन कर्षिता ।
हरिणांककगे सौम्ये [7]गर्भावापमतं स्मृतम् ॥ २३५८ ॥

[8]भवेयुः जीवजा बहवः पुत्रस्त्वेकः सुजीवति ।
हरिणांककगे सौम्ये एकमा[9]ता सुपुत्रवान् ॥ २३५९ ॥

एकः पुत्रविहीनश्च[10] करकद्रवयोगवान् ।
वार्धके पुत्रवान् कश्चित् सौम्यनाडीगतं स्मृतम् ॥ २३६० ॥

सुनेत्रांशे हरिश्चन्द्रे कुटुंबेऽस्य गते शनौ ।
[11]सिद्धेर्विनाशः स्यादपि हरिणां[12]कोद्भवस्य च ॥ २३६१ ॥

स्वर्णानुरागी केन्द्रे[13] कुटुंबे गते शनौ ।
[14]लोकरागप्रियमासेति मन्दराये फलं स्मृतम् ॥ २३६२ ॥

हरिणांककगे सौम्ये सुनेत्रेण समन्विते ।
भ्रमणशील लघुजे पुत्रीभाग्यवृद्धिवान् ॥ २३६३ ॥

---

1. [illegible]
2. [illegible]
3. [illegible]
4. [illegible] 5. [illegible]
6. [illegible] 7. [illegible]
8. [illegible]
9. [illegible] 10. [illegible]
11. [illegible] 12. [illegible]
13. [illegible] 14. [illegible]

वार्धके स्त्रीषु[1] पुण्यात्मा सर्वदा दुर्बलः कृशः ।
गृहच्छिद्रकलापेन भ्रातृपुत्रविरोधवान् ॥ २३६४ ॥
लग्नाद्वा चन्द्रलग्नाद्वा गोचरे शनिचारगे ।
[2]राशीनां द्वादशानां च कथ्यन्तेऽथ फलानि च ॥ २३६५ ॥
विपत्तिहानिर्संपत्तिकुक्षिरोगं महद्भयम् ।
शत्रुक्षयं महाधैर्यं मरणं देहशोषणम् ॥ २३६६ ॥
पीडनं लाभनष्टं च क्रमेण कुरुते शनिः ।
हरिणांशकगे सौम्ये सिंहेन्[3]दौ वृश्चिकांशके ॥ २३६७ ॥
सम्पद्वाये पितुः सौख्यं गेहे गोधनसङ्कुलम् ।
विवाहोत्सवकार्याणि [4]पितरिष्टं विनिर्दिशेत् ॥ २३६८ ॥
शन्यङ्गारकसंदृष्टे चन्द्रे नीचनवांशगे ।
स्वपि[5]त्ररिष्टतः पूर्वं मातुर्मरणमादिशेत् ॥ २३६९ ॥
ज्येष्ठभ्रातृवियोगेन क्लेशं प्राप्नोति भूरिशः ।
कुम्भचक्रदशाकाले हरिणां[6]शोद्भवस्य च ॥ २३७० ॥
[7]विनाशयोगं पित्रोश्च सोदरारिष्टमादिशेत् ।
कुम्भे शनिस्थिते काले कुम्भचक्रे महाविपत् ॥ २३७१ ॥
सन्तानोत्पत्तिनाश [8]च विप्लवेन धनक्षयम् ।
शनिचक्रदशाकाले मकरे व्याकुलं महत् ॥ २३७२ ॥
शुभाशुभफलं चैव पापबाहुल्यमादिशेत् ।
[9]मृगचक्रदशाकाले हरिणांशे महत् सुखम् ॥ २३७३ ॥

---

1. स्त्री च पुण्यात्मा
2. राशीनां द्वादशैतानि फलाफलविचिन्तये ।
3. नीचांशगे शशी
4. पित्रारिष्टं
5. स्वपितारिष्टजः पूर्वं
6. अंशस्य जातके
7. मातापितृविनाशादि
8. स्यादिप्लवेन
9. चतुष्पदशाकाले

स्वकार्यफलं नेति स्वपुत्रोद्वाहवः परम् ।
जीवे चतुर्थपर्याये हरिणां[1]शोद्भवस्य च ॥ २३८५ ॥

वृश्चिकाङ्गारके चक्रे प्राबल्यं चोत्तरोत्तरम् ।
तुलाचक्रे महत् सौख्यं चत्वारिंशे श्रिया [2]युतम् ॥ २३८६ ॥

स्वल्पपुत्र[3]फलं चेति मध्यखण्डे न संशयः ।
वृश्चिकाङ्गारके चक्रे [4]ह्युत्तरांशे स्वपुत्रिका ॥ २३८७ ॥

[5]स्यात् सन्तानवतीत्याहुस्तुलाचक्रे महत् सुखम् ।
तुलाचक्रदशाकाले पुत्रिणी सौख्यमश्नुते ॥ २३८८ ॥

पुत्रिकोद्वाहसौ[6]ख्यं च गृहे गोधनसङ्कुलम् ।
[7]तुलाचक्रान्त्यकालेषु योजयेत् कालवित्तमः ॥ २३८९ ॥

कन्याचक्रदशाकाले पुत्रप्राबल्ययोगवान् ।
चक्रान्ते मृत्युमाप्नोति [8]माहस्तु कुम्भादिषु त्रिषु ॥ २३९० ॥

कन्याचक्रदशाकाले द्वादशान्त्यादिजन्मगे ।
स्फुटयोगं गते मन्दे कालमृत्युर्भविष्यति ॥ २३९१ ॥

तत्त्रिकोणं गते मन्दे [9]ह्यपमृत्युश्च चक्रगे ।
देहालस्यं [10]च लभते कालमृत्युभयं क्वचित् ॥ २३९२ ॥
देहे [11]पापे स्थिते काले गोचरे हरिणांशगे ।
तत्त्रिकोणे देहजाड्यं क्षिप्रेणारोग्यसौख्यवान् ॥ २३९३ ॥

[12]मध्यान्त्यांशगते मन्दे हरिणांशे मृतिं वदेत् ।
पुण्यलोकफलप्राप्तिर्भयारूढे [13]भृगौ स्थिते ॥ २३९४ ॥

---

1. हरिणांशस्य जातके
2. श्रियावहम्
3. बलं
4. उत्तरांशे
5. सन्तानप्राप्तमित्याहुः
6. सौख्यादि
7. तुलान्तश्चक्रवाक्येषु योजयेत् फलमेव च ।
8. कुम्भादिनिषु मासगे
9. इतरश्चति
10. प्रकुर्वीत
11. पापग्रहे
12. मध्यपूर्णांशके काले
13. भृगुस्थिते

व्यये पापे व्यया¹धीशे शुभांशे पापवीक्षिते ।
भार्गवे पुत्रशोकार्तिः पश्चाज्जन्म²नि सौख्यवान् ॥ २३९५ ॥

—: * :—

## मेषलग्ने कुटिलांशः ।

हरिणाङ्कगे मीने शुभांशे वृषभे बुधे ।
मिथुनेन युते दृष्टे ³चिरजन्मा भवापवान् ॥ २३९६ ॥

पैतृकाम्यार्थसंपन्नः सोदरमातृपोषकः ।
महानदीवाल्यदेशे ⁴स्वगृहारे निवासवान् ॥ २३९७ ॥

ग्रामणीश्चैत्रवादी च राजद्वारे परि⁵द्धिमान् ।
कुलीरांशे पञ्चभागे मेषलग्ने भवायते
पुत्रजन्मायुषी नित्यं भवेत् सौमन्तुप्रवान् ॥ २३९८ ॥

• • • •

## गर्भजातकम् ।

मन्मान्तरे स्थितिदे वा ज्येष्ठमातृविहीनवान् ।
स्वानमातृत्वापेति शुभाशे भव.⁶ स्मृतः ॥ २३९९ ॥

गर्भः—

कुग्रामे पट्टणे चैव विधयोनौ तु जायते ।
एकः कनिष्ठ[1]युक्तस्य पितुर्देशान्तरे मृतिः ॥ २४०१ ॥

असितांशे स्थिते सूर्ये कुलटांशे निशाकरे ।
कुटिलांशे प्रजातस्य [2]सुतो वा संभवे चिरात् ॥ २४०२ ॥

लग्नेशे रविसंयुक्ते कारकेन निरीक्षिते ।
पापकर्मरतो नित्यं राजसेवी धना[3]र्जकः ॥ २४०३ ॥

लग्नाच्चतुर्थगे चन्द्रे शन्यङ्गारकवीक्षिते ।
अलसो मतिमान् रागी परवित्ताङ्गनाप्रियः ॥ २४०४ ॥

वेश्यास्त्रीसङ्गवान् कामी [4]मिथ्योऽमात्यस्य लोलुपः ।
कुष्ठी रुजातुरो वाग्मी [5]चोष्णमेहशरीरवान् ॥ २४०५ ॥

लग्ने[6]शे लोचराशिस्थे शुभारूढे शुभान्विते ।
तेजस्वी मतिमान् धीरः स्वकार्यनिरतः सुखी ॥ २४०६ ॥

वृषभांशे विलग्नेशे लोचे रविसमन्विते ।
कोपी क्षिप्रप्रसन्नात्मा ज्ञातिभाग्यसुयोगवान् ॥ २४०७ ॥

स्यान्मेषलग्ने[7] जनितोऽतिरक्तः
मेहप्रधानः सुकुमारदेहः ।
कामी नित्यं साहसी भ्रातृ[8] वैरी
[9]लुब्धश्चासौ ज्ञातिबाहुल्ययुक्तः ॥ २४०८ ॥

मेषलग्ने[10]ऽर्कहोरायां सिंहद्रेक्काणगस्तथा ।
रसाद्विगते मन्दे बाल्ये सौख्यविहीनवान् ॥ २४०९ ॥

---

1. कनिष्ठतस्य
2. सुते वा संभवे चिरात्
3. धनार्जितः
4. अमात्यप्रोष्यलोपकः
5. उष्णमेह
6. लग्ने लोचे च
7. लग्नाज्जनितो
8. रोगी
9. ज्ञातिबाहुल्यलब्धकः ।
10. सूर्यहोरे सिंहद्रेक्काणजातके

शिवभक्तिरतो नित्यं शिव[1]धर्मपरः सुखी ।
मातृस्थानाधिपे चन्द्रे स्वक्षेत्रे कुटिलांशगे ॥ २४१० ॥

स्वमाता विधवा भूत्वा बहुकाले सुजीवति ।
पुत्रशोकवती माता भ्रातृनाशेन कर्शिता ॥ २४११ ॥

देशान्तरे [2]भ्रातृयुता ज्ञातिवर्गेण पोषिता ।
कर्मे रवियुते भौमे मीने शुक्रे कुजांशगे ॥ २४१२ ॥

[3]स्त्रीयभ्राता तु गङ्गायां स्नातो बहुदिनं सुखम् ।
पुंसोऽस्य पुत्रमुत्पाद्य क्षयरोगेण नश्यति ॥ २४१३ ॥

देशान्तरे [4]भ्रातृशोकज्ञातिवर्गेण जीवति ।
दाराक्षोभपदो नित्यं ज्येष्ठभ्रातृवियोगवान् ॥ २४१४ ॥

नानाविधक्लेशगेति भ्रातृभावफलं स्मृतम् ।
पितृस्थानाधिपे जीवे कुम्भे वर्गोत्तमांशगे ॥ २४१५ ॥

स्वपिता विप्रसेवी स्याद्भ्रातृमान् सोदरीयुतः ।
वाणिज्यशूद्रसेवादि[5]जीवनं स्वपितुः क्वचित् ॥ २४१६ ॥

देशत्यागं [6]न कुरुते पितुर्दुर्मरणं [7]भवेत् ।
कुटिलांशगते चन्द्रे [8]पितृष्वेको ह्यपुत्रवान् ॥ २४१७

[9]एको मुख्यः प्रसिद्धश्च राजद्वारे सुपूजितः ।
शिवभक्तिरतो नित्यं द्विकलत्रः सुपुत्रवान् ॥ २४१८ ॥

स्वपितुः[10] सोदरभ्राता कश्चित् पापी [11]त्रिपुत्रवान् ।
वेदसङ्ख्याथ वा चेति पुत्रपुत्रीसमृद्धिमान् ॥ २४१९ ॥

---

1. शिवप्रसादपरं
2. भर्तृयुक्ता ज्ञातिवर्गे सुजीवितम्
3. तस्य "
4. भर्तृयुक्ता ज्ञातिवर्गेण जीवति
5. स्वपिता जीवनं
6. प्रकुर्वीत
7. भवेत्
8. पितृष्वेक अपुत्रवान्
9. एकः बधिरः
10. स्वपिता
11. भाग्यवान्

[1]आयुष्मन्तौ पितृव्यौ द्वौ कश्चिद्दारान्तरेऽपि च ।
कालान्तरे सुतप्राप्ति[2]दुःखिता पितृसोदरी ॥ २४२० ॥

[3]आयुष्मत्यौ द्वित्रिसङ्ख्या एका पुत्रवती भवेत् ।
पितृष्व[4]सृद्वयोरेका वैकल्येन च कर्शिता ॥ २४२१ ॥

कालान्तरे पुत्रवती [5]त्वेकापुत्रसमन्विता ।
एकः स्वपितृव्यसुतो राजमुद्राधिकारवान् ॥ २४२२ ॥

बहुपुत्रार्थसंपन्नो भेदभ्रातृयुतः सुखी ।
विपद्दायेऽपरा[6]र्थादौ ज्ञातिप्राबल्यमादिशेत् ॥ २४२३ ॥

पितृव्यपुत्रयोगेन भाग्यवृद्धिः शुभावहा[7] ।
क्ष्माधिपे कर्मराशौ स्वोच्चे सूर्यसमन्विते ॥ २४२४ ॥

चन्द्रदृष्टे प्रजातस्तु गङ्गास्नान[8]फलं लभेत् ।
उत्तरांशे प्रजातस्तु[9] य इदं फलमश्नुते ॥ २४२५ ॥

पूर्वभागे विशे[10]षेण भ्रातृलक्षणमुच्यते ।
[11]यस्यकस्यापि यो जातो गङ्गां गत्वा गयां व्रजेत् ॥ २४२६ ॥

[12]सोऽप्यासप्तमकुलानि पूर्वोत्तराणि चोद्धरेत् ।
[13]भाग्ये च राहुणा दृष्टे [14]भ्राता स्याद्दारशोकवान् ॥ २४२७ ॥

तेन शोकेन तद्भ्राता क्षीणायुर्नरकं व्रजेत् ।
भाग्येशे कालकूटांशे रविजांशेऽथ वा स्थिते ॥ २४२८ ॥

क्ष्माद्विकमगे राहौ स्त्रीमूलाद्भ्रातृनाशनम्[15] ।
इदमेव फलं [16]योऽयमुत्तरांशोद्भवस्य च ॥ २४२९ ॥

---

1. पितृव्यौ द्वौ चिरायुष्यं
2. दुःखी पुत्रसहोदरी
3. द्वित्रिसङ्ख्या चिरायुष्यं
4. पितृस्वसा द्वये चैका
5. एका
6. अपरार्थादि
7. शुभावहम्
8. गङ्गास्नातृफलं
9. प्रजातस्य
10. विशेषस्तु
11. यदा तस्यास्तु यो जातो गङ्गां स्नात्वा गयां चरेत् ।
12. तेन चासप्तकुलं पूर्वमुत्तरमुद्धरेत् ।
13. भाग्यगे राहुणा दृष्टे
14. भ्रातु स्याद्दारशोकदः
15. नाशनम्
16. उत्तरांशस्य जातके

पूर्वभागे प्रजातस्य[1] सोदरः पापकर्मवान् ।
भाग्येऽष्टमे वा स्व[2]र्भानौ तृतीये रविनन्दने ॥ २४३० ॥

[3]भृगौ लोभे प्रजातस्तु [4]नाशयेत् पैतृकक्रियाम् ।
कालान्तरे पुण्यदेशे पितृसंस्कारमादिशेत् ॥ २४३१ ॥

श्रद्धाभक्तियुतः पश्चात्तत्कालान्ते क्रियां चरेत् ।
सुख राशीशराशौ तु गुरौ बुधसमन्विते ॥ २४३२ ॥

राहुदृष्टे समाता[5] च प्रणवादि शिवार्चनम् ।
तेन पापेन तस्य तु[6] पुत्रशोकादि दारुणम् ॥ २४३३ ॥

तस्मात्तु वंशवृद्धिश्च न भवेन्निरयं भवेत् ।
[7]षष्ठस्थे च निशानाथे भृगुतेन निरीक्षिते ॥ २४३४ ॥

पितृवंशस्य वृद्धिः स्यान्मातृवंशक्षयं भवेत् ।
पद्ममेशे रन्ध्रपेन समेते त्रित्रिकोणगे ॥ २४३५ ॥

मन्दे राहुयुते पुत्रीविवाहे वित्तमादिशेत् ।
कालान्तरे च भर्तारं दारिद्र्यं प्राप्य तत्सुता ॥ २४३६ ॥

अलक्ष्मीपतिमादानाच्चतुर्ता भाग्यवान् सुखी ।
बहुदु खा बहून् कालानल्पपुत्रवती भवेत् ॥ २४३७ ॥

एवं च गर्भदोषाणां [8]प्रोक्ता पुत्रवती सुता ।
बहुपुत्रवती नित्यं पितृभाग्येन जीवति ॥ २४३८ ॥

धर्मः—

चातुर्वर्ण्येषु जातानां कन्यानां मातृतुल्यात् ।
कार्यो विवाहो नान्यासां क[9]न्यका नियमस्तथा ॥ २४३९ ॥

---

1. प्रजातस्तु
2. स्वर्भानुस्तृतीये
3. भृगु
4. नाशयेत् पैतृकक्रिया
5. समाहुः स्यात् प्रणवादि शिवार्चनं
6. स्यात्
7. षष्ठारूढे
8. चिरकालेन चातुरा
9. कन्यायां

यस्तु कन्यामृतुमतीं [1]चातुर्वर्ण्यसमुद्भवाम् ।
उद्वाहात् पति[2]र्वांद्याद्देदासस्यं कुलम् ॥ २४४० ॥

इत्थं च मनुना प्रोक्तं पाराशर्येण चोदितम् ।
होराशास्त्रे तथा प्रोक्तमिदमेव फलं स्मृतम् ।
अष्टवर्षा भवेत् कन्या नववर्षा तु रोहिणी ॥ २४४१ ॥

दशवर्षाभवेद्गौरी [3]ह्यत ऊर्ध्वं रजस्वला ।
कन्यापाणिग्रहो मुख्यो द्विजानां क्षत्रवैश्ययोः ॥ २४४२ ॥

शूद्रस्य रोहिणी गौरी विवाहस्तस्य [4]चोच्यते ।
पुत्राणामथ पुत्रीणां विवाहो [5]विघ्निते सति ॥ २४४३ ॥

सुमङ्गलीमहालक्ष्मीगौरी पूजाविधीयते ।
क्षीरैर्वाप्यथहारिद्रैरभिषेकं रमाम्बयोः ॥ २४४४ ॥

सुमङ्गल्यै[6] वस्त्रदानं परमान्ननिवेदनम् ।
[7]सकृद्वा चासकृत् पूजां यथरेच्छ्रद्धयान्वितः ॥ २४४५ ॥

तस्य विघ्नविनाशः[8] स्याच्छीघ्रं पाणिग्रहो भवेत् ।
कुन्तलांशे निशानाथे शन्यङ्गारकवीक्षिते ॥ २४४६ ॥

पुत्रोद्वाहाद्विघ्नं स्यात्तस्येमां शान्तिमाचरेत् ।
भाग्येशे लाभराशिस्थे विक्रमेशेन संयुते ॥ २४४७ ॥

तल्लाभे गोचरे मन्दे पुत्रिकोद्वाहमादिशेत् ।
विक्रमेशे यदेशस्थे तद्राशौ वा निरीक्षिते ॥ २४४८ ॥

तत्त्रिकोणांशमासेषु पुत्रिकोद्वाहसंभ्रमः[9] ।
दाराधिपदशाकाले दारला[10]भस्शुभावहः ॥ २४४९ ॥

---

1. चतुर्वर्णं
2. पतितो यत्रा दहेमां
3. ह्यतः
4. उच्यते
5. विघ्नके
6. सुमङ्गली
7. एकेम्वेष्वनेके वा
8. विनाशे
9. संभ्रमम्
10. लाभं शुभावहम्

उत्तरार्धे विद्याप्राप्तिः सोदरोद्वाहसम्भ्रमः ।
मत्यन्तर्दशायां कन्याप्राप्तिरिति विद्याद्[1] परं सुखम् ॥ २४५० ॥

विवाहे सर्वकर्माणि[2] सन्तानादि भवेत्ततः ।
यावता बिन्दुना युक्तो भाग्येशः शुभसंयुतः ॥ २४५१ ॥

तावत्कुमारा जायेरन् [3]पुत्रिका रम्यरूपिणी।
असितांशे सुताधीशे काकवन्ध्यापतिः सुखी ॥ २४५२ ॥

भार्या गुणवती श्यामा [4]स्वैकभ्रातृसमन्विता ।
[5]कलत्रसोदरभ्राता स्वैकपुत्रयुतो भवेत् ॥ २४५३ ॥

सहोदरो[6] द्विस्त्रिसुतो बाल्ये दुष्टस्वभाववान् ।
बाल्यारिष्टभयं किंचिच्छान्त्या शान्तिं प्रयास्यति ॥ २४५४ ॥

लाभेशे स्वोच्चराशिस्थे भ्रातृपुत्रः सुखी भवेत् ।
कलत्रद्वयवान् भोगी पितृव्यार्जितवित्तवान् ॥ २४५५ ॥

स्वभुजार्जितसंपत्तो ज्ञातिभाग्य[7]युतः सुखी ।
कर्मे कन्यांशगे सूर्ये [8]जातस्य मेषलग्नके ॥ २४५६ ॥

द्रव्यार्जनसमर्थश्च भ्रातृपुत्रस्तु पोषकः ।
धनाधिपदशाकाले गोचरे द्वादशे शनौ ॥ २४५७ ॥

वैष्णवद्वेषमूलेन राजोपद्रवशोकवान् ।
जन्मदाये पितृव्यस्य दारारिष्टं विनिर्दिशेत् ॥ २४५८ ॥

द्वितीयोद्वाहमाप्नोति पितृसौख्यं विनिर्दिशेत् ।
पश्चात् सहोदरीमृत्युर्भ्रातृलाभो ह्यतः परम् ॥ २४५९ ॥

विद्यारम्भं [9]च लभते सौम्ये मन्ददशान्तरे ।
जन्मतारदशा[10]न्त्ये च स्वपितुर्यांकुले मदत् ॥ २४६० ॥

---

1. विद्याप्यान्तरे
2. कर्म स्यात्
3. तत्तुल्या शुभरूपिणी
4. एकभ्रातृ
5. प्रपदे सोदरभ्रातृ एकपुत्रप्रदो
6. सहोदर
7. भाग्यप्रदः
8. मेषलग्नस्य जातके
9. प्रवृत्ति
10. दशासन्धि तत्पिता च

ज्वरोपद्रवमाप्नोति ज्ञातिवर्गे मनोव्यथाम् ।
मण्डलाधिपतेर्मृत्युरौर्व्य[1]कलहो महान् ॥ २४६१ ॥

गुरुशन्यारकालेच देशे दक्षिणभागगे ।
मण्डलाधिपते[2]र्नाशो भवेत् सेनाधिपस्य च ॥ २४६२ ॥

चापान्ते मकरादौ च तत्त्रिकोणे गुरौ शनौ ।
पाण्ड्यभूपतिसन्ताप[3]श्चापमृत्युभयं भवेत् ॥ २४६३ ॥

मृगानने तत्त्रिकोणे स्फुटयोगं गते शनौ ।
स्ववर्णे[4]नगरे चैव भवेद्राजान्तरं तथा ॥ २४६४ ॥

यस्मिन् देशे पट्टणे ग्रामभे वा
जन्मे वित्ते चाष्ट[5]मे च त्रिकोणे ।
यद्वा [6]कर्मण्यागते सूर्यपुत्रे
राजक्षोभो[7] देशपीडा विपत्तिः ॥ २४६५ ॥

एकमेव पुरग्रामपट्टणानां तु सर्वशः ।
तत्तन्नामानुसारेण फलं ज्ञेयं बुधोत्तमैः ॥ २४६६ ॥

असिवांशकगे सूर्ये स्थिरराशि[8]चतुष्टये ।
स्फुटयोगं गते मन्दे पाण्ड्यभूपतिनाशनम् ॥ २४६७ ॥

[9]तत्पुत्रस्यभवेन्मृत्युस्तथा सेनाधिपस्य वा ।
मीनत्रिकोणगे मन्दे चोलभूपतिनाशनम् ॥ २४६८ ॥

ससेनानृपतीनां तु [10]ग्ररिष्टमिति चादिशेत् ।
सुतेशांशे तत्त्रिकोणे मीने वा गोचरे शनौ ॥ २४६९ ॥

---

1. कलहं महत्
2. नाशं भवेत् सेनाधिपो मृतिः
3. सन्तापमपमृत्यु
4. स्ववर्णदेशे नगरे
5. चाष्टमद्वा
6. कर्मण्यागते
7. क्षोभं
8. राशौ
9. तत्पुत्रं वा मृतं चेति सेनाधिपतिमेव च ।
10. अरिष्टमिति

स्ववासदेशनृपतेर्व्याधिं वा नाशमीरयेत् ।
अष्टमे गोचरे मन्दे भाग्येशांशेऽथ वा यदि ॥ २४७० ॥
स्वाज्ञातिवर्गेण क्लेशं प्राप्नोति भूरिशः ।
धनाधिपदशाकाले भाग्याधिपतिभुक्तिषु ॥ २४७१ ॥
असितांशे प्रजातस्य स्त्रीमंजालाभमादिशेत् ।
राहुदोषेण[1] वा पश्चात् सन्तानप्रतिबन्धकम् ॥ २४७२ ॥
कालान्तरे सुतप्राप्तिं[2] केचित्पक्षे विनिर्दिशेत् ।
सुखाधिपदशायां[3] तु सुखाधिपतिदायगे ॥ २४७३ ॥
राजान्तरवशाद्भाग्यसुयोगप्राप्तिमादिशेत् ।
स्वपितृव्यसुतः कश्चित् क्लेशं चेद्दशवत्सरम् ॥ २४७४ ॥
पश्चात् भाग्यप्राप्नोति बन्धुवर्गे श्रिया[4]युतम् ।
विपद्दाये [5]पित्ररिष्टं त्रयोविंशतिवत्सरे ॥ २४७५ ॥
सप्तविंशेऽथ वा चेति कुटिलांशो[6]द्भवस्य च ।
मेषे शनिस्थिते काले मीने वापितृनाशनम् ॥ २४७६ ॥
सप्तमे मकरे माता परलोकं प्रयास्यति ।
पञ्चमे सोदरक्लेशं मत्यग्दाये [7]सुतामयम् ॥ २४७७ ॥
ज्ञातिवर्गे मनस्तापं स्वपितृव्यसुतामयम् ।
जन्मे शनिस्थिते काले द्वादशान्तेऽथ वा यदि ॥ २४७८ ॥
धनाधिपदशाकाले पितृव्यक्लेशमादिशेत् ।
सुखाधिपदशायां[8] तु रन्ध्राधिपतिदायगे ॥ २४७९ ॥
अपमृत्युभयप्राप्तिः पितृव्यस्य विनाशनम् ।
रन्ध्रेशांशे त्रिकोणे स्फुटयोगं गते शनौ ॥ २४८० ॥

---

1. ततः
2. प्राप्तिः
3. भाग्यादि
4. बहम्
5. पितारिष्ट
6. दास्य जातके
7. दशागमम्
8. लादि

प्रत्यग्दाये कुन्तलांशे [1]त्वपमृत्युभयं महत् ।
चापे शनिस्थिते काले वातरोगप्रपीडितः ।
पुत्रिकोद्वाहमाप्नोति पौत्रलाभं विनिर्दिशेत् ॥ २४८१ ॥

[2]मीने धनुर्युवतियुग्मगतेऽर्कपुत्रः
[3]सौम्यैर्युतो वा बलिभिस्त्ववलोकितो वा ।
दुर्भिक्ष[4]शत्रानलचोरभयानि यानि
प्रोक्तानि तानि न भवन्ति भवन्ति पापैः ॥ २४८२ ॥

कन्याचक्रदशासंधिकाले क्लेशफलं विदुः ।
प्रत्यग्दाये शुक्रचक्रे देह[5]कार्श्यं विनिर्दिशेत् ॥ २४८३ ॥

कुन्तलांश[6]गते चन्द्रे दशायां देहराशिगे ।
पापग्रहाक्रान्तकाले क्रूरमासे रुजातुरः ॥ २४७४ ॥

तद्दोषपरिहारार्थं शान्तिं कुर्याद्यथाविधि ।
अष्टाविंशोत्तरशतं चतुष्षष्टि[7]पलं वा ॥ २४८५ ॥

द्वात्रिंश[8]त्पलमात्रं वा गृहीत्वा कांस्यपात्रकम् ।
[9]राजतं चन्द्रबिम्बं च पलषोडशसंयुतम् ।
तण्डुलं षोडश प्रस्थं द्विगुणं परिगृह्य च ॥

[10]मण्डपं च तथा कृत्वा वस्त्रैराच्छाद्य चोपरि ।
कांस्यपात्रे[11] च निक्षिप्य चन्द्रस्य प्रतिमां क्षिपेत् ॥ २४८६ ॥

धूपदीपार्घ्य[12]युक्तैश्च पुष्पगन्धाक्षतादिभिः ।
स्वर्णपुष्पैर्विशेषेण पूजयेदमृतांशुं ॥ २४८७ ॥

---

1. अपमृत्यु
2. मीनं
3. सौम्यो युतो भजति यद्यवलोकितो वा ।
4. शस्त्रगत
5. देहकार्श्यं
6. अंशकगे
7. पलं
8. फलं
9. रजतं षोडशपलं सम्मात्येन्दुं विधाय च ।
10. राशिं कृत्वा नवैर्वस्त्रैराच्छाद्योक्तं विधाय च
11. तण्डुलं कांस्यपात्रे तदुपरि राजतं तु विधाय च
12. पायसैश्चतथा पुष्पफलादिभिः

सौवर्णसूर्य[1]प्रतिमां ताम्रपात्रे निधाय च ।
पूर्वोक्तविधिना पूजामाचरे[2]दिन्दुना समम् ॥ २४८८ ॥

परमान्नं भगवतो भानोर्नैवेद्यमाचरेत् ।
[3]शरावनीतं क्षीरान्नं कदलीफल[4]मिश्रितम् ॥ २४८९ ॥

नैवेद्यमिन्दोः कल्पयन् मुच्यते ह्यपमृत्युतः ।
यश्चरेदुक्तविधिना परिहारंसमन्त्रकम् ॥ २४९० ॥

तस्य रोगा विनश्यन्ति [5]ह्यायुश्च परिवर्धते ।
बालारिष्टं च न भवेदपमृत्युभयं च न ॥ २४९१ ॥

ऐश्वर्यं वर्धते नित्यं कीर्तिः स्यादनपायिनी ।
नित्यंवंशाभिवृद्धिः स्याद्भवेच्छत्रुपराभव. ॥ २४८२ ॥

स्वपुत्रिका [6]समाकल्प्या भर्तृसौख्यवती भवेत् ।
चन्द्रसूर्यप्रसादेन वाञ्छितार्थो भवेत् सदा ॥ २४९३ ॥

एवं संपूज्य विधिवत् प्रतिमाधिकदक्षिणाम्[7] ।
[8]दद्याच्च ज्योतिषज्ञाय ह्यर्केन्दुप्रतिमां तथा ॥ २४९४ ॥

तेन दानेन चन्द्रार्कौ सुप्रसन्नौ[9] दयान्वितौ ।
दिशेतां दीर्घमायुष्यं स्वदशासु[10] स्वभुक्तिषु ॥ २४९५ ॥

क्रूरमहदशाकाले गोचरे क्रूरकालगे ।
क्रूरमहान्तरे चैव य इदं दानमाचरेत् ॥ २४९६ ॥

चन्द्रसूर्यप्रसादेन तस्य सर्वे शुभप्रदाः ।
आयुरारोग्यसौभाग्यं दिशेयु कीर्तिमुत्तमाम् ॥ २४९७ ॥

---

1. आदाय
2. चन्द्रया
3. क्षीरं शरावनीतं च
4. एव च
5. आयुश्च परिवर्धयेत्
6. सुमाकल्प्यं
7. दक्षिणम्
8. निधाय ज्योतिषकरे दत्वा सूर्येन्दुमादरात्
9. सुप्रसन्न
10. स्वदशासु निधु

इदं रहस्यं पापघ्नं लोकानां हितकारणम् ।
नारदेन [1]सुताऽध्याये कथितं परमर्षिणा ॥ २४९८ ॥

तेनाच्युताय विप्राय प्रसन्नेनाभिभाषितम् ।
[2]तां पूजामाचरेत् प्राज्ञो मनुज. स सुखी भवेत् ॥ २४९९ ॥

मृत्युञ्जयं महामन्त्रं जपेद्विप्रमुखैः सुखी ।
मार्कण्डेयः [3]पुरा जप्त्वा[4]मृत्युपाशाद्विमोचितः ॥ ५५०० ॥

मण्डलं वा तदर्धं वा जपेन्मृत्युविनाशनम् ।
आयुरारोग्यसौ[5]भाग्यवृद्धिस्तस्य दिने दिने ॥ २५०१ ॥

कुन्तलांशकगे चन्द्रे कुटिला[6]शोद्भवस्य च ।
सूर्यचन्द्रप्रसादेन तुलाचक्रे मिथं वदेत् ॥ २५०२ ॥

नूतनगृहनिर्माणं ज्ञातिवैरं सुतोत्सवम् ।
पितृव्यपुत्रयोगेन धनशर्मं विनिर्दिशेत् ॥ २५०३ ॥

मीनमुखत्यन्तमारभ्य कीटान्ते मुक्तिकालके[7] ।
त्रिपञ्चाशात् परं मृत्यु सार्धं [8]द्विवत्सरेभवेत् ॥ २५०४ ॥

अष्टमाधिप[9]भौमस्य दशाया शनिभुक्तिषु ।
मेषलग्ने प्रजातस्य कालमृत्युर्भविष्यति ॥ २५०५ ॥

यद्यष्टमे [10]शनियुतेऽप दृष्टे
जातस्य वा तस्य भवेच्च कष्टम् ।
योगद्वयं स्याद्विधिन यदेको
योगस्तथा मृत्युसमत्वमाहुः ॥ २५०६ ॥

---

1. सुतोऽ
2. तद्पुण्यमार्चकात्वेतु
3. पुरो
4. यपमृत्युर्विनश्यति
5. भाग्य वृद्धिश्च दिनादिने
6. अशस्य जातके
7. कालगे
8. वर्षके विपत्
9. आधिपतौ भौमे
10. यदियुतोऽपिनस्य दृष्टेऽप वा तस्य विपत्तदापि ।

वृश्चिकांशे व्यये शुक्रे लोपे दुर्गतिभागगे ।
देहान्ते नरके [1]याति कुटिलांशसमुद्भवः ॥ २५०७ ॥

गुरुस्तृतीयपर्याये मीनाद्यौ[2] श्रियमश्नुते ।
तुलादौ व्याकुलं [3]चैति मेषादित्रिषु च सुखम् ॥ २५०८ ॥

स्वजन्मराशिमारभ्य शनिचारेण योजयेत् ।
गोचरे शनिचारेण राश्युक्तफलमादिशेत् ॥ २५०९ ॥

लग्नाद्वा चन्द्रलग्नाद्वा रन्ध्रेशांशत्रिकोणगे ।
पापवेधाक्रान्तकाले सामान्यफलमादिशेत् ॥ २५१० ॥

तत्कालगोचरम[4]हस्थितिजन्मकाल-
ग्रहस्थितिं समवलोक्य च सूक्ष्मदृष्ट्या ।
[5]अन्तर्दशाधिपदशेशबलं च बुद्ध्वा
निर्णीय तादृशफलं विफलं च ब्रूयात् ॥ २५११ ॥

ये ग्रहा जन्मकाले तु यस्मिन् राशौ स्थितिं गताः ।
[6]तस्मिन् राशौ दशारम्भे गतास्ते शुभदायिनः ॥ २५१२ ॥

लग्नाद्वा चन्द्रलग्नाद्वा गोचरे लाभगे [7]तमः ।
तस्मात् सूर्यबलाभावान्मासि माण[8]भयं भवेत् ॥ २५१३ ॥

जन्मद्वादशरन्ध्रगेऽसति महाक्रूरेऽति पापे शनौ
मासे कष्टदशाविरामसमये तत्कालचक्रेऽथ वा ।
कालान्तके[9]ऽभिषेचनं च जप वा मृत्युञ्जयप्रार्थनं
मह्या [10]स्वर्णसुदर्शनस्य विधिवत् पूजाप्रदाने चरेत् ॥ २५१४ ॥

---

1. यान्ति कुटिलांशस्य जातके
2. मीनादि
3. चेति मेषादित्रयगे
4. गोचरग्रह
5. अन्तर्दशादिशस्तात्स्वपदेशमवेक्ष्य
आलोचयन्नुत्पद्युतानि फलानि दद्यात् ।
6. तद्राशिस्तु दशायां गतास्तेऽपि शुभप्रदाः ।
7. लाभगेऽस्तमः
8. प्राणसमाशुभम्
9. कालान्तरेऽभिषेचनं तद
10. किंच

[1]य इदं परिहारं तु कुरुते श्रद्धया[2]न्वितः ।
[3]तस्येदं विजयः श्रेयः कीर्तिरन्यादृशी भवेत् ॥ २५१५ ॥

जन्मकालग्रहस्थित्या [4]दशेशस्यबलेन च ।
ग्रहचारेण वक्तव्यं शुभाशुभफलं नृणाम् ॥ २५१६ ॥

लाभाधिपांशगे जीवे भाग्येशांशकगेऽथ वा ।
गोचरे सौख्यमाप्नोति [5]सुयोगंधनवान् भवेत् ॥ २५१७ ॥

धनेशांशे तत्त्रिकोणे लाभेशांशत्रिकोणगे ।
स्फुटयोगं गते जीवे धनलाभं विनिर्दिशेत् ॥ २५१८ ॥

धनेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ।
लाभेशांशे तत्त्रिकोणे ज्ञातिवर्गे [6]महाविपत् ॥ २५१९ ॥

स्वदारदेहजाड्यादि[7] प्रत्यकारदशान्त्यगे ।
प्रबलज्ञातिसन्तापं दारवंशे [8]ह्यरिष्टदम् ॥ २५२० ॥

देह[9]धर्मव्ययेशानां स्फुटयोगं गते गुरौ ।
चन्द्रे वाप्यथवा सौम्ये पुण्यतीर्थाटनं भवेत् ॥ २५२१ ॥

देवतादर्शनं चैव देवब्राह्मणपूजनम् ।
तत्तत्काले गोचरेषु फलान्यूह्यानिसूरिभिः ॥ २५२२ ॥

मीनशुक्रदशाकाले मकरे रवि[10]भुक्तिषु ।
सेतुस्नानफलप्रा[11]प्तिं जातकस्य विनिर्दिशेत् ॥ २५२३ ॥

चापान्ते मिथुनान्ते वा तन्मध्ये वा [12]शनौ स्थिते ।
कुटिलांशे प्रजातस्य राजोपद्रवं मादिशेत् ॥ २५२४ ॥

---

1. इदं यत्
2. समम्
3. तस्यायं
4. दशाभावानुगुण्यते
5. सुयोगधनवान्
6. महद्विपत्
7. जाड्यादि
8. अरिष्टदं
9. धर्मे
10. दायगे
11. प्राप्तिजातकस्य
12. शनिस्थिते

भत्यब्दाये मध्यलग्ने पञ्चमे गोचरे शनौ ।
षष्ठांशे व्याकुलं [1]चेति सप्तमे प्राणसंशयम् ॥ २५२५ ॥

पूर्वोक्तशान्ति[2]कार्येण ह्यरिष्टशतनाशनम् ।
आयुरारोग्यसौभाग्यं राजप्रीतिशुभावहम् ॥ २५२६ ॥

वत्सरे षाष्टपञ्चांशे निधनेशदशान्तगे ।
क्रूरमासे कालमृत्युर्गुरुभौमार्कवासरे ॥ २५२७ ॥

नाडिपञ्चमहत्फलं कुटिलां[3]शोद्भवस्य च ।
रन्ध्राधिपदशा[4]मृत्युं यावज्जीवं सुभाग्यवान् ।
मल्लाराग्निदेशमार्गे फलं निश्चार[5]मुच्यते ॥ २५२८ ॥

—:*:—

## पञ्चग्रहनाडी फलम् ।

सुखाधिपे सुखस्थाने दशायां [6]सुखजीवनः ।
नूतनगेहस्य निर्माणं धनधान्यादिकं भवेत् ॥ २५२९ ॥

पापांशगे सुखाधीशे पापग्रहनिरीक्षिते ।
क्रूरकाले तद्दशायां स्वराजोप[7]द्रवो भवेत् ॥ २५३० ॥

सुखेशांशे तत्त्रिकोणे स्फुटयोगं गते शनौ ।
सुखेशदृष्टिराशौ वा नृपतिक्षोभमादिशेत् ॥ २५३१ ॥

कर्मेशांशे तत्रिकोणे स्फुटयोगं गते शनौ ।
कर्मेशदृष्टिराशौ[8] वा सोदरभ्रातृनाशनम् ॥ २५३२ ॥

1. चेति सप्तमे प्राणसंशय
2. कर्मेण अरिष्ट
3. अशस्य जातके
4. दशामृत्युः
5. आदिशेत्
6. सुखिनो भवेत्
7. उपद्रवं महत्
8. राशिर्वा

क्रूरमासे च तत्पूर्वे स्वपितृव्यसुतामयम् ।
ज्ञातिशोकफलप्राप्ति[1]मशुभं तत्र निर्दिशेत ॥ २५३३ ॥

ज्ञातिवर्गे सुतारिष्टं बन्धुवर्गे सुतक्षयम् ।
सहोदरभ्रातृपीडां[2] मातृशोकं विनिर्दिशेत् ॥ २५३४ ॥

षष्ठाष्टमाधीशयुक्तौ सुखाधिपतिशायगे ।
राजामात्यजनस्नेहमुद्योगादिधनागमम् ॥ २५३५ ॥

ततः पश्चाद्देहजाड्यं भ्रातृपुत्रस्य[3] निर्दिशेत् ।
तद्गोचरे शुभे जीवे शुभ[4]सन्तानमाप्नुयात् ।
जीवे शन्युते काले पुत्र[5]पीडां मनोव्यथाम् ॥ २५३६ ॥

अन्तर्दशाधिपे दुष्टे गोचरे क्रूरमासगे ।
स्वजनात्मजपीडादि भवेद्वन्धुनृपव्यथा ॥ २५३७ ॥

[6]स्वसेवितनृपद्वारे दायादिकलहः[7] क्वचित् ।
अन्तश्छिद्रकलापेन स्वराजामात्यव्याकुलम् ॥ २५३८ ॥

कर्माधिपान्तरे काले षष्ठेशस्यान्तरे [8]ऽन्यथा ।
इदमेव फलं सत्यं योजयेत् कालवित्तमः ॥ २५३९ ॥

पुत्रिकोद्वाहसन्तोषं षट्चत्वारिंशवत्सरे ।
जामातृसौख्यमाप्नोति स्वगेहे[9] श्रियमश्नुते ॥ २५४० ॥

लाभेशांशे तत्त्रिकोणे दशराश्यंशगे[10]ऽथवा ।
जामातृभवनं [11]चैव जन्मर्क्षे च विनिर्दिशेत् ॥ २५४१ ॥

लाभे राहुस्थिते काले षष्ठे गोचरगे शनौ ।
राजद्वारे कलापः[12] स्यान्मित्रात्मजस्वजनावधि ॥ २५४२ ॥

---

1. प्राप्तिः
2. पीडा
3. फलं भवेत्
4. सन्तोषम्
5. पीडा मनोव्यथा
6. स्वसेव इपति
7. कलहं
8. यथा
9. स्वगेह
10. अंशगे
11. चेति
12. कलापं

पश्चात् स्वस्थं महत् सौख्यं ज्ञातिवर्गे शुभाधिकम् ।
सर्वाध्यक्षाधिकारादियोगं प्राप्नोति भूरिशः ॥ २५४३ ॥
मण्डलाधिप[1]तेर्मृत्युर्लोके [2]दुर्भिक्षजं भयम् ।
शनिमुक्तौ फलं [3]ब्रूयात् सुखाधिपतिदायगे ॥ २५४४ ॥
बुधान्तरे स्वसामन्तसन्तानप्राप्तिमादिशेत् ।
मन्दान्तरे ज्ञातिवर्गे पुत्रलाभं महत् सुखम् ॥ २५४५ ॥
अपमृत्युभयप्राप्तिः शान्त्या शान्तिं प्रयास्यति ।
सुखाधिपदशाकाले पापवेधमहान्तरे ॥ २५४६ ॥
मेषलग्ने प्रजातस्य मातृनाशं विनिर्दिशेत् ।
चन्द्रे शम्बन्तरे काले शुभाशुभफलं समम् ॥ २५४७ ॥
जामातृवंशे सन्तापं ज्वरोपद्रवमादिशेत् ।
चन्द्रे शुक्रान्तरे काले कुन्तलांश[4]समुद्भवः ॥ २५४८ ॥
अतीव सौख्यमाप्नोति क्रूरमासं विना सुखम् ।
शुक्रान्तरे क्रूरमासे राजोपद्रवमादिशेत् ॥
विप्लवेन मनस्तापं पश्चात् स्वस्थं शुभाशुभम् ॥ २५४९ ॥
पञ्चाशद्वत्सरे क्लेशं कालच[5]क्रदशाभयम् ।
कालचक्रप्रदानेन देहारोग्यं विनिर्दिशेत् ॥ २५५० ॥
चन्द्रसूर्यान्तरे काले पुत्रिकासौख्यमश्नुते ।
पुत्रोत्सवफलप्राप्तिं[6] जामातृप्रीतिमादिशेत् ।
सुखाधिपदशा[7]सन्धौ तत्काले स्वगृहे शुभम् ॥ २५५१ ॥
पुत्रोत्सवफलप्राप्तिर्बन्धुवर्गे मनोव्यथा ।
भ्रन्यान्तरे कुन्तलांशे सुखाधिपदशान्तगे ॥ २५५२ ॥

---

1. पतौ मृत्यु
2. डांबरम्
3. चेति
4. अंशस्य जातके
5. चक्रे
6. प्राप्तिर्जामा
7. संधि

स्वजनात्सजनक्लेशं राज[1]र्वोऽप्यरिष्टदम् ।
कुम्भे शनिस्थिते काले दशासन्ध्योर्मनोव्य[2]थाम् ॥ २५५३ ॥

विप्लवेन मनस्तापं स्वपितृव्यस्य नाशनम् ।
लग्नाधिपदशाकाले कुन्तलांशो[3]द्भवस्य च ॥ २५५४ ॥

धनधान्ययुत [4]प्राप्तिराजप्रीति विनिर्दिशेत् ।
पितृव्यघातयोगेन स्वभावस्थं धनागमम् ॥ २५५५ ॥

प्रबलोद्योगसौख्याप्तिस्तत्सुतः प्रबलो[5] भवेत् ।
कुजान्तरे क्रूरमासे व्रणोपद्रवमादिशेत् ॥ २५५६ ॥

कुम्भे शनिस्थिते काले पुत्रिकाज्वरमादिशेत् ।
सूतिकावातरोगेण देहजा[6]ड्यं मनोव्यथाम् ॥ २५५७ ॥

पश्चादारोग्यमाप्नोति देहकार्श्यं[7] विनिर्दिशेत् ।
लाभाधिपदशाकाले [8]पापभुक्तौ तथा भवेत् ॥ २५५८ ॥

क्रूरमासे देहजाड्यं शान्त्या शान्ति प्रयास्यति ।
रन्ध्राधिपदशाकाले रन्ध्रस्थ[9] पापद्रायगे ॥ २५५९ ॥

अपमृत्युभयप्राप्ति[10] स्वजनारिष्टमादिशेत् ।
लग्नाधिपदशाकाले भाग्याधिपतिभुक्तिषु ॥ २५६० ॥

राजामात्यप्रसादेन धनलाभं विनिर्दिशेत् ।
स्वगेहे शुभसन्तानं बन्धुवर्गं विनिर्दिशेत ॥ २५६१ ॥

मीने [11]रिष्टफलप्राप्तिर्धर्मेशोऽतिधनागमम् ।
रन्ध्राधिपदशाकाले मन्द[12]भुक्त्यन्त्यकालगे ॥ २५६२ ॥

---

1. धर्मे अरिष्टद
2. व्यथा
3. अशस्य जातके
4. प्राप्तिः राजप्रीतिः
5. प्रबलं
6. यथा
7. कार्य
8. दुरेत्पापोऽपिवा यदि
9. पापे महान्तरे
10. प्रति
11. बन्धा फलप्राप्तिर्धर्मेशोऽपि
12. मन्दस्यान्ते च से यदि

मेषलग्ने प्रजातस्य प्रबलज्ञातिनाशनम् ।
भूसुतस्य दशाकाले दु:खी स्याद्रविजान्तरे ॥ २५६३ ॥
जीवान्तरेऽपमृत्युश्च जीविते दैर्घ्यमायुषः ।
कुम्भांशे प्रजातस्य प्रत्यक्ष देवकेरलम् ॥ २५६४ ॥

—:*:—

## चन्द्रक्रियावस्थाफलानि

[1]इतः परं प्रवक्ष्यामि तत्कालेन्दुपरिस्फुटम् ।
[2]चराचरत्रिलोकस्य यज्ज्ञानेन फलं लभेत् ॥ २५६५ ॥
[3]लाभालाभौ सुखं दु:खं जीवितं मरणं तथा ।
[4]विजयापजयं चैव गमनागमनं तथा ॥ २५६६ ॥
[5]लोकोचितां तथा वृष्टिं राजावस्थादिकौतुकम् ।
एतत् सर्वं तथा चान्य[6] जायतेन्दुपरिस्फुटात् ॥ २५६७ ॥
[7]ततश्चन्द्रस्यावस्थादिनिर्णय कथ्यतेऽधुना ।
तथा विलिप्तिका सप्त हृत्वा लिप्ता नवैस्तथा ॥ २५६८ ॥
पक्षे दु:खगुणासङ्ख्या ३००, १५, ३०, ५ ।
हत्वा व्यो[9]मामचाब्धिवा ७०००, ३०, १८२, ७०००, ८ ॥ २५६९॥

---

1. अपात.
2. येन विज्ञानमात्रेण त्रैलोक्यं सचराचरम्
3. लाभान्तरे
4. जयापजयं चेति गमागमननिश्चयम् ।
5. लोकोचितां तथा वृष्टिं
6. चान्ये जायतेन्दुपरिस्फुटम्
7. चन्द्रम् लसोवस्थानिरीक्षयः ।
8. विलिप्तहतसाया
9. व्योमम

[1]स्थानाद्भ्रष्टस्तपस्वी च ह्यन्यस्त्रीसक्त लम्पटः ।
[2]द्यूतकृच्च गजारूढः सिंहासनस्थितस्तथा ॥ २५७० ॥

[3]नृपतिर्वैरिहन्ता च दण्डनेता गुणी तथा ।
निष्प्राणच्छन्नमूर्धा च क्षतपादकरस्तथा ॥ २५७१ ॥

बन्धनस्थो विनष्टस्तु नृपतिर्वेदपाठकः ।
सुतः सुचरितश्चैव स्मृतिमान् धर्मकार्यवान् ॥ २५७२ ॥

सद्वंशो निधिसंयुक्तः श्रुतवंशोऽर्थबोधकः ।
शत्रुहन्ता च रोगी च ह्यरिनिर्जित एव च ॥ २५७३ ॥

स्वदेशाच्चलितो मृत्यो विनष्टार्थक इत्यपि ।
आस्थानी च सुमन्त्री च परदेशपतिस्तथा ॥ २५७४ ॥

सभार्यो गजभीतश्च संयुगे भीतिमांस्तथा ।
भयाधिकश्च क्रीडी च ह्यन्नदाताभिरक्षकः ॥ २५७५ ॥

क्षुद्बाधासहितश्चात्रविचरन् मांसभोजकः ।
अस्त्रक्षतश्च सोद्वाहो धूतकञ्चुक घूतकृत ॥ २५७६ ॥

राजा च दुःखितश्चैव शय्यास्थो रिपुसेवितः ।
मित्रेण युक्तो रोगी च भार्यायुक्तश्च मृष्टाशी ॥ २५७७ ॥

---

1. स्थानभाल च अस्य स्त्री देवी चोरगजस्थितः ।
2. सिंहासनस्था राजानः सेव्ये परिचमूपतिम् ॥
3. पाणिनादंशिरःपादैर्धन्यागोदेहनात्रभाक् ।
राजाध्ययनकृत्सादिध[म]कारे च पुण्यकृण्यकृत् ।
सर्वाशयो निधिप्राप्तिः स्थूलास्तभ्यां च कारिहा ।
ज्वरस्थानच्युतो यातः पवनेऽधिकृतात्मकः ॥
अास्थानस्थो हरियर्वि भार्याजीतो गजस्थितिः ।
समन्त्र इन्दुभीरश्च प्रवासनदयो विधुः ॥
क्षुत्वाभुक्त्व चंक्रस्थिभिद्धुः नृपतिनायकः ।
अशुचि कलहो मर्यो पतस्थो नृपवर्तिमान् ॥
क्यानरस्नानुभिन्मसैः सदा ध्यायीच तत्त्ववित् ।
मृष्टभुक्पायसं सान्तं च प्रवासे च सुखासनम् ॥
नक्षत्रे पश्चिमे च चन्द्रकार्यशुभानहम् ।

पयःपायी पुण्यकर्ता स्वस्थश्चास्ते सुखी तथा ।
नक्षत्रे पद्धिकार्याणि चन्द्रस्य तु शुभानि च ॥ २५७८ ॥

प्रकारान्त[1]रम्—

[2]स्थानाच्च्युतस्तपस्वी च परनारीरतिं गतः ।
[3]स्तेयी गजाधिरूढश्च मेषे पद्मगुणा विधोः ॥ २५७९ ॥

सिंहासनस्थितो राजा राज्ञां मध्यग[4]तस्तथा ।
शत्रुहन्ता च सेनानीर्वृषे पद्मगुणा [5]विधोः ॥ २५८० ॥

[6]प्राणच्युतो भग्नशिराः पाणिपादव्रणाङ्कितः ।
[7]बन्धी तु देहनाशी च युग्मे पद्मगुणा [8]विधो ॥ २५९१ ॥

भूपत्वं वेदपाठित्वं मद्यपान[9]विनिन्दिताम् ।
[10]धर्मकर्ता च कर्मी च कर्कटे शशिनो गुणाः ॥ २५८२ ॥

[11]सद्देशजो निधियुतः सुकीर्तियुतवेशमः ।
व्याख्याता[12] शत्रुहन्ता च सिंहे पद्मगुणा [13]विधोः ॥ २५८३ ॥

ज्वरा[14]र्तः स्थाननाशी च परैर्जितस्तु भृत्यकः ।
कन्यास्त्रीसङ्ग[15]मे सक्तः कन्यायां शशिनो गुणाः ॥ २५८४ ॥

---

1. प्रकारान्तरे
2. स्थाननाशं ततश्चैव परनारी तथैव च
3. शौर्यं गजादिरोगं च मेषे पद्मगुणा विदुः ।
4. मध्यगतिः
5. विदुः
6. प्राणहानिशिरश्चैव पाणिपादविनाशनम् ।
7. बन्धनं देहनाशाय
8. विदुः
9. पानादिनिन्दितम्
10. धर्मस्थितसधर्मत्वं कर्कटे शशिनो यथा ।
11. देशे जन्म शुभे जन्म तुलाया शशिरस्य च ।
12. व्याख्यान
13. विदुः
14. ज्वरार्तिः स्थाननाशं च शत्रुभे च स्त्रीषो दरः ।
15. कन्यास्त्रीसंगमनाशं

[1]आस्थानी च सुमन्त्री च अन्यदेशपतिस्तथा ।
[2]विवादी च गजारूढस्तुलायां शशिनो गुणाः ॥ २५८५ ॥

मन्त्री स्वमन्त्रिभि[3]र्योद्धा ग्रस्तः समरभीतिमान् ।
[4]निद्रायुक्तोऽग्निपातश्च कीटे तु शशिनो गुणाः ॥ २५८६ ॥

[5]क्षुधार्तस्त्वन्नभोक्ता च मांसभुक् चास्त्रताडितः ।
निवासी[6]चान्यदेशेषु चापे पञ्चगुणा विधोः ॥ २५८७ ॥

स्वस्त्रियां कन्दुक[7]क्रीडी स्वस्त्रीहस्तमहान्वितः ।
[8]धूनी विहारी राजा च मृगे स्वगुणाविधोः ॥ २५८८ ॥

शिशिरः पुण्यदेहश्च मित्र[9]र्वर्णसंयुतः ।
चक्रपाणिगृहे [10]राजा कुम्भे पञ्चगुणा विधोः ॥ २५८९ ॥

मृष्टाशी क्षीरपायी च पुण्यकर्मकरस्तथा ।
स्वस्थश्चापि सुखी चैव मीने पञ्चगुणा विधोः ॥ २५९० ॥

चन्द्रस्य द्वादशावस्था राशौ [11]राशौ प्रकल्पयेत् ।
नाडीरदे च युक्ताभिरेकादशभिरेव च २५९१ ॥

प्रवासनष्टाख्यमृताजयाख्य-
हास्यारतिक्रीडति सुप्तभुक्तिः ।
ज्वरगहृवाकम्पितसुस्थिरे च
द्विषट्कसंख्याश्च विधोरवस्था.[12] ॥२५९२ ॥

---

1. आस्थानं दशवरमवे वन्तिमश्चकराज्यभृत् ।
2. विवादश्च गजारोहं तुलाया शशिनो गुणः ।
3. युद्धं भीतित्वशल्यदुष्टकृत्
4. निद्रायामग्निपातश्च वृश्चिका:
5. क्षुधार्तिरन्नभोक्ता च स्वगुरुश्च मदा विदु ।
6. च सुराशी च चापे पञ्चगुणाविदुः
7. क्रीडा स्वस्त्रीहस्तमह तथा
8. धूने रतिस्तथा राजदु खेन च गुणा विधुः ।
9. राशिभिरेव च
10. राजकुम्भे पञ्चगुणा विधुः
11. राशि
12. स्त्यादि सुगोरवस्था,

सुस्थिरे शुभसंदृष्टे शुभवर्गे स्थिरे विधौ ।
सर्वारम्भाः[1] प्रसिध्यन्ति लग्ने च शुभवर्गके[2] ॥ २५९३ ॥

भानुक्षेत्रगते मन्दे यदि भौमसमन्विते ।
अवस्थाकम्पिते चन्द्रे निग्रही चित्तभीषणः[3] ॥ २५९४ ॥

स्वक्षेत्रगे यदा चन्द्रे जयावस्था जयप्रदा ।
शोभने सर्वकार्येषु लाभालाभादि कर्मसु[4] ॥ २५९५ ॥

स्वतुङ्गगे निशानाथे हास्यावस्था शुभप्रदा ।
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ॥ २५९६ ॥

कार्यार्थी कार्यसिद्धिं च सर्वमप्यशुभाशुभम् ।
परमोच्चांशगे चन्द्रे रत्यावस्था शुभप्रदा ॥ २५९७ ॥

क्रूरराशिगते चन्द्रे तदधीशसमन्विते ।
प्रवासं कुरुते कार्ये विफलं सर्वकर्मणि ॥ २५९८ ॥

क्रूरराशिगते चन्द्रे यदि भौमसमन्विते ।
ज्वरावस्था[5] ज्वरं तापं शुभदृष्टिः शुभप्रदा[6] ॥ २५९९ ॥

क्रूरदृष्टिस्तु मरणं रहस्यं साम्प्रदायिकम् ।
बुधक्षेत्रगते[7] चन्द्रे यदि भौमसमन्विते ।
सुप्तावस्था विनिर्दिष्टा हानिशोकभयप्रदा ॥ २६०० ॥

गुरुराशिगते चन्द्रे गुरुयुक्तेऽथ वीक्षिते ।
भुक्तावस्था विनिर्दिष्टा सर्वकार्यशुभप्रदम् ॥ २६०१ ॥

सुभोजनसुसौख्यानि सौभाग्यं च सुखानि च ।
स्नानदानादिसिद्धिः स्याज्जायते च शुभप्रदा ॥ २६०२ ॥

---

1. सर्वारम्भं
2. स्ववर्गगे
3. भीषणम्
4. कर्मणि
5. ज्वरावस्थे
6. शुभप्रदम्
7. बुधक्षेत्रगते

भृगुक्षेत्रगते चन्द्रे तदीशेन समन्विते ।
शुभदृष्टियुते चन्द्रे क्रीडावस्था सुखप्रदा ॥ २६०३ ॥

चरराशिगते चन्द्रे शुभग्रहसमन्विते ।
शुभदृष्टियुते प्रश्ने जयी जयति निश्चयः ॥ २६०४ ॥

स्थिरराशिगते चन्द्रे लग्नेशेन[1] समन्विते ।
मिथुनग्रहसंदृष्टे स्थायी जयति निश्चयः ॥ २६०५ ॥

द्विस्वभावगते चन्द्रे भृगुभौमाभिवीक्षिते ।
स्थायी जयमवाप्नोति विपरीते विपर्ययः ॥ २६०६ ॥

मेषालिवृषराशिस्थे चन्द्रे स्थायी जयं[2] लभेत्[3] ।
अष्टोत्तरशतावस्था चन्द्रे गच्छत्यहर्निशम् ॥ २६०७ ॥

साधयेद्दिनचर्यायां[4] फलं सम्यग्वदाम्यहम् ॥ २६०८ ॥

भोजनप्रश्नः —

प्रवासस्थानगे चन्द्रे मौढान्नं लभते बुधः ।
लवणं चाधिकं वापि षड्रसैश्च विवर्जितम्[5] ॥ २६०९ ॥

अजीर्णभोजनं दुःखं मानसक्षीणभोजनम् ।
नष्टावस्थायुते चन्द्रे शाकपाकविवर्जितम् ॥ २६१० ॥

शुष्कान्नाशनप्राप्तिस्तु[6] प्रश्नकालवशात् फलम् ।
मृतावस्थागते चन्द्रे प्रदुष्टं[7] लभते नरः ।
[8]अजीर्णस्य विकासेऽत्र व्याधिपीडां[9] विनिर्दिशेत् ॥ २६११ ॥

॥ इति चन्द्रावस्था ॥

---

1. लग्नेग्रह
2. यायी
3. भवेत्
4. चर्यादि
5. रसषड्वि .. वर्जितः,
6. शुष्कान्नाशनप्राप्तिः
7. अदुष्टं
8. स्वविकारोत्थं पीडा
9. व्याधि

## ॥ अथ भावफलानि ॥

तृतीयभावनाथानां[1] लग्नाच्चन्द्राच्च कारकात् ।
तत्र भावपतीनां वा [2]अंशेशानामथापि वा ॥ २६१२ ॥

स्फुटयोगं गते सौम्ये तत्र योगं विनिर्दिशेत् ।
पापारिनीचगे मूढे [3]त्वशुभं तत्र निर्दिशेत् ॥ २६१३ ॥

सलग्नस्थस्थितिं ज्ञात्वा निर्दिशेत् कालवित्तमः ।
आधानजन्मकर्मार्थसंपदायै गुरोर्बलात् ॥ २६१४ ॥

[4]सुतस्य चन्द्रगुर्वोश्च स्फुटयोगं गते शनौ ।
पुत्रप्राप्तिस्तु तत्काले सुतेशे शुभवीक्षिते ॥ २६१५ ॥

तत्सुतेशयोगेन[5] पुत्रप्राप्तिं विनिर्दिशेत् ।
सुखदेहाय नाथानां स्फुटयोगं गते शनौ ॥ २६१६ ॥

अतिसौख्यं धनप्राप्तिं निर्दिशेत् कालवित्तमः ।
धन[6]देहायनाथानां स्फुटयोगं गते गुरौ ॥ २६१७ ॥

लाभं च धनधान्यानां निर्दिशेच्छुभवीक्षिते ।
धनवृद्धिक्षितीशानां स्फुटयोगं गतेशनौ २६१८ ॥

धनधान्यपशूनां च हानिं तत्र[7] विनिर्दिशेत् ।
देहवृद्धिप्रियेशानां स्फुटयोगं गते शनौ ॥ २६१९ ॥

कर्मसिद्धिस्तु तत्काले तत्कर्मेशनिरीक्षिते ।
धनकर्मायनाथानां स्फुटयोगं गते गुरौ ॥ २६२० ॥

स्त्रीलाभं मघवा भोगं[8] निर्दिशेद्गुरुवीक्षिते ।
विवाहकर्मनाथानां स्फुटयोगं गते गुरौ ॥ २६२१ ॥

---

1. भावपतीनां तु
2. अंशेशानाम्
3. त्वशुभं
4. सुतोऽपि गुरुचन्द्राभ्यां
5. योगे वा
6. धनायदेहपानां
7. हानिः
8. स्त्रीलाभो ..... मघाभोगः

प्रभूतधनलाभं च निर्दिशेत् सोमवीक्षिते ।
क्षेत्रादिधनलाभानां स्फुटयोगं गते शनौ २६२२ ॥

स्त्रीलाभं भूमिलाभं च[1]थवा नरवाहनम् ।
[2]धनभाग्यव्ययेशानां स्फुटयोगं गते शनौ ॥ २६२३ ॥

धनहानिं महद्दुःखं निर्दिशे[3]च्छुभवीक्षिते ।
देहपुत्रव्ययेशानां पुत्रहानिंविनिर्दिशेत् ॥ २६२४ ॥

देहभ्रातृव्ययेशानां भ्रातृहानिं निनिर्दिशेत् ।
परभ्रातृव्ययेशानां भ्रातृहानिं विनिर्दिशेत् ॥ २६२५ ॥

व्ययकामधनेशानां स्फुटयोगं गते शनौ ।
धनहा[4]निं महद्दु.खं निर्दिशेच्छुभवीक्षिते ॥ २६२६ ॥

देहपुत्रव्ययेशानां पुत्रहानिं विनिर्दिशेत् ।
मन्दे राहुसमायोगे भार्याहानिं विनिर्दिशेत् ॥ २६२७ ॥

इति मन्दकुटुम्बानां चन्द्रस्याथ भार्गवे ।
स्फुटयोगं गते शुक्रे स्त्रीलाभं निर्दिशेद् बुधः ॥ २६२८ ॥

देहकर्मायनाथानां स्फुटयोगं गते गुरौ ।
चन्द्रे वाप्यथवा सौम्ये तीर्थसिद्धिं निनिर्दिशेत् ॥ २६२९ ॥

विक्रमाय[5]व्ययेशानां स्फुटयोगं गते फणौ ।
भ्रातृहा[6]निं महारोगं निर्दिशेद्रिपुवीक्षिते ।
कुजमन्दफणीनां च स्फुटयोगं गते फणौ ॥ २६३० ॥

महारोगं मनस्तापं निर्दिशेदम्बराशिगे ।
व्ययपुत्राय[7]नाथानां स्फुटयोगं गते कुजे ॥ २६३१ ॥

---

1. अथवा
2. धने
3. सुखवीक्षिते
4. हानिर्महद्दुःख निर्दिशेत् सुख
5. विक्रमादि
6. हानिर्महारोग
7. पुत्रादि

पुत्रहा[1]नि महद्दुःखं निर्दिशेद्रिपुवीक्षिते ।
[2]देहार्थलाभनाथानां लग्नाचन्द्रबृहस्पतौ ॥ २६३२ ॥

स्फुटयोगं गते मन्दे धनलाभं विनिर्दिशेत् ।
तत्त्रिकोणेऽथ वा चन्द्रे जीवे शुक्रे शुभेक्षिते ॥ २६३३ ॥

त्रयाणांमृत्युनाथानां स्फुटयोगं गते ध्वजे ।
कर्महानिं[3] महाक्लेशं स्थानाच्चलनतोऽपि वा ॥ २६३४ ॥

स्फुटयोगं गते मन्दे मरणं तत्र निर्दिशेत् ।
त्रयाणां कर्मनाथानां निर्दिशेद्राहुवीक्षिते ॥ २६३५ ॥

त्रयाणां भाग्यनाथानां गुरोः [4]चन्द्राच्च लग्नतः ।
स्फुटयोगं गते राहौ भाग्यहानिं विनिर्दिशेत् ॥ २६३६ ॥

षष्ठाष्टमव्ययेशानां स्फुटयोगं गते शनौ ।
मरणं निशि जातानां दिनजानां त[5]दस्तगे ॥ २६३७ ॥

मन्दमान्द्याहिसंयोगे स्फुटयोगं शनैश्चरे ।
कुजे वा राहुपुच्छे वा मरणं तत्र निर्दिशेत् ॥ २६३८ ॥

लग्नचन्द्रसुखेभ्यश्च षष्ठेशानां स्फुटे शनौ ।
मातुर्वियोगं तत्काले निर्दिशेत् कालवित्तमः ॥ २६३९ ॥

त्रयाणां भाग्यनाथानां लग्नाचन्द्राच्च भास्करात् ।
स्फुटयोगं गते मन्दे पितृहानिं विनिर्दिशेत् ॥ २६४० ॥

त्रयाणां पुत्रनाथानां [6]पुत्राच्चन्द्राच्च लग्नतः ।
स्फुटयोगं गते जीवे पुत्रलाभं विनिर्दिशेत् ॥ २६४१ ॥

त्रयाणां कामनाथानां शुक्राच[7]न्द्राच्च लग्नतः ।
स्फुटयोगं गते शुक्रे भार्यालाभं विनिर्दिशेत् ॥ २६४२ ॥

---

1. हानिर्महद्दुःखं निर्दिशेद्रिपुनायके
2. तथा तु
3. हानिंमहाक्लेशं
4. चन्द्रे रवहर्
5. तमस्करे
6. पुरं
7. ... .. लग्नात्